UNIVERSITY OF TRAVANCORE.

SANSKRIT SERIES No. CXLVII.

# THE

# ṚKSAMHITĀ

## (Part III.)

with the Bhāshya of Skandaswāmin and Dīpika of Venkatamādhavārya.

EDITED BY

Vaidyaśāstramaṇiḥ, L. A. Ravi Varmā,

*Honorary Director, University Manuscripts Library, Trivandrum.*

---

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,

1942.

 [Price Rs. 1-8-0.

# PREFACE.

This is the third volume of Ṛksaṃhita with the Bhāṣya of Skandasvāmin and the commentary of Venkaṭa-Mādhava. In the introduction to the first volume, the idea mooted by my predecessor that the author might be a Keraliya demands further study. As far as can be made out, there is nothing to show that it is so. The fact that all the manuscripts were collected from Kerala means little, when it is remembered that all the known manuscripts of Kautalīya Arthaśāstra were of Kerala origin.

The period of the author is very definite from the colophon of the Śatapatha Brāhmaṇam by Harisvāmin, son of Skandasvāmin. Necessarily, the Ṛkbhāṣya must have been finished before 639 A. D.

Trivandrum,
25th June 1942.

L. A. Ravi Varma,
*Honorary Director.*

■

# शुद्धिपत्रिका ।

| पुटम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ७ | ४ | प्रयत् | प्र यत् |
| ,, | १० | निर्धमसम | (निर्धम?निरधमः) सम- |
| ११ | १ | ब्रह्मंभिः | ब्रह्मभिः |
| ,, | ९ | प्रयुज्यमानै | प्रयुज्यमानै- |
| १५ | २७ | निर्वचनाय आवश्श-ममिति ॥ | निर्वचनाय ॥ |
| १६ | २१ | (आवः शमम् ।) | आवश्शमामिति । |
| १७ | १९ | आद्रात्रि | आद्रात्री |
| १८ | २६ | ए् वार्थे | (ए्)वार्थे |
| २० | १५ | वर्तिवर्तिन्या | वर्तिर्वर्तन्या |
| २३ | २२ | वाक्यतां नेयम् । | वाक्यता नेया |
| २४ | २६ | पर्यशाययतं | पर्यशायतं |
| २६ | २८ | अस्य | भस्य |
| ३० | ९ | ह्वयामि | ह्वयामि |
| ५० | १२ | इशत | ईशत |
| ७० | ११ | अह्वय्प्य | अह्वय्प्य |
| ७४ | ८ | ूरात् | दूरात् |
| ८३ | ,, | ब्रह्मण | ब्रह्मण |
| ८४ | १७ | आप्तुं | आप्तुं |
| ८७ | २६ | प्रतिष्ठते | प्रातिष्ठते |
| ९२ | १९ | न्तर्णीत | त्रान्तर्णीत |
| ९६ | ,, | द्र्यावनिः | द्र्याविनः |
| ९९ | २६ | चास्मदाय | चास्मदीय |
| १०३ | २५ | वाक्तया | वाक्यता |
| १०४ | १० | करातु | करोतु |

| पृष्ठम्. | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १०७ | २१ | हर्त | हर्त- |
| ११७ | १० | चतुष्कस्येब | चतुष्कस्येव |
| १२४ | २४ | नाश्विनोः पूर्य | नाश्विनोरपूर्य |
| १२६ | १० | सर्थेत्यर्थः। | सर्थेत्यथः (?)। |
| १२९ | ६ | भूय | भूय- |
| १३१ | ३ | कतां नेयम् | (कतां नेयम्? कता नेया) |

॥ श्रीः ॥

# ऋक्संहिता

## भर्तृध्रुवसुतस्कन्दस्वामिकृतभाष्येण वेङ्कटार्यतनयमाधवार्यकृतव्याख्यानेन चोपेता पदपाठसहिता ।

---

### (तृतीयो भागः ।)

ओम् एतायामोपगव्यन्तइन्द्रमस्माकंसुप्रमतिंवावृधाति ।
अनामृणःकुविदादस्यरायोगवांकेतंपरमावर्जतेनः ॥ १ ॥

आ । इत । अयाम । उप । गव्यन्तः । इन्द्रम् । अस्माकम् सु । प्रऽमतिम् । ववृधाति । अनामृणः । कुवित् । आत् । अस्य । रायः । गवाम् । केतम् । परम् । आऽवर्जते । नः ॥ १ ॥

स्कन्दस्वामीयम् ।

विघ्नेश ! विधिमार्तण्डचन्द्रेन्द्रोपेन्द्रवन्दित ! ।
नमो गणपते ! तुभ्यं ब्रह्मणां ब्रह्मणस्पते ! ॥

ओम् । एत आगच्छत मत्पुत्रा ऋत्विजो वा । अयामोप । 'या प्रापणे' । उपशब्दोऽप्युपसर्गः । 'छन्दसि परेऽपि' (१·४ ८१) इत्येवं परः प्रयुक्तः । उपायाम उपागच्छाम । गव्यन्तः गा इच्छन्तः । इन्द्रम् । अथवा अयामेति 'ईमहे यामी'त्यस्य याच्ञाकर्मणो रूपम् । उपशब्दस्तूपसर्गो धात्वर्थानुवादी । उपसर्गश्रुतेर्वा योग्यक्रियाध्याहारः । याचामहे उपगम्य गव्यन्त इन्द्रम् । किं पुनरत्र याच्यते । गावः । कुत एतत् । गव्यन्तः[1] गा इच्छन्त इति वचनात् । इष्यमाणस्य च याच्यमानत्वात् । कस्मात् पुनरिन्द्रमुपायाम ।

---

१. 'न्त इति' क. ग. पाठः.

G. P. T. 1493. 500. 13-2-1115

उच्यते। यस्मात् अस्माकं सुप्रमतिम्। सुशब्दोऽत्र सुष्ठ्वर्थे। प्रशब्दः प्रकर्षे। मतिरपि 'यामि मन्मह' इति याच्ञाकर्मसु पाठाद् याच्ञायाम्। सुष्ठु प्रकृष्टां याच्ञाम्। वावृधाति। वृधिरत्रान्तर्णीतण्यर्थः। लुङर्थे च लेट्। याचितप्रदाने (न) पुनःपुनरवीवृधत्। यद्यद् याचितं तत्तद् दत्तवानित्यर्थः। यस्माच्च अनामृणः। 'मृण हिंसायाम्'। अहिंस्यः शत्रुभिर्हिंसितुमशक्यः। कुवित्। बहुनामैतत्। अत्यन्तबहुः। आदिति निपातः पदपूरणः। अस्येन्द्रस्य। रायः वसु धनम्। 'वसु रायो राध' इति हि धननामपाठाद्धननामैतत्। प्रथमार्थे षष्ठीयम्। यस्मादत्यन्तबहुधनत्वाद् दानसमर्थ इत्यर्थः। यस्माच्च गवां केतम्। गोशब्दोऽत्र सास्नादिमद्वचन उदकनाम वा। केतशब्दोऽपि सामर्थ्यात् समूहवचनः। गवामपां वा समूहम्। परमत्यन्तोत्कृष्टम् आवर्जते। वृजिरत्र सामर्थ्यादन्तर्णीतण्यर्थो दाने वर्तते। आवर्जयति ददाति। नः अस्मभ्यम्। यस्मादिदानीमप्यस्मभ्यं गां वृष्टिं वा ददात्येवेत्यर्थः। अथवा केतशब्दः ज्ञेयवचनः। गवामिति तु निर्धारणे षष्ठी। गवां मध्ये यत् केतं ज्ञेयमत्यन्तोत्कृष्टं गोजातं परमावर्जते सुष्ठु ददातीति ॥ १ ॥

### वेङ्कटमाधवीयम्।

'एतायामोपगव्यन्तो' माधवो व्याचिकीर्षति।
समासानां स्वराद् वृत्तिरादौ तत्र प्रदर्श्यते ॥

मुख्यस्तत्पुरुषः प्रोक्तो द्वन्द्वश्च तदनन्तरः[1]।
तृतीयस्तु बहुव्रीहिरव्ययीभाव उत्तरः ॥

तत्रोत्तरपदार्थस्य प्राधान्यं यत्र विद्यते[2]।
उदात्तस्तत्र भवति सुरूपकृत्नुमूतये ॥

द्रविणोदाद्रविणसो हव्यवाहं पुरुप्रियम्।
त्रिष्वादित्यं द्रुपदेषु नो हिरण्यरथं सदा ॥

यदि स्वरः पूर्वपदे तदर्थः प्रस्फुटो भवेत्।
भगभक्तस्य ते वयं विप्रजूतः स तावतः ॥

तवेद्धि सख्यमस्तृतमनाधृष्टास ओजसा।
अच्छिन्नपत्राः सचन्तामप्रजाः सन्तु चात्रिणः ॥

अनुदात्तश्च दृष्टो नञयोर्द्वेव+दुर्मदः।
तादृशेषूत्तरपदे प्राधान्यमिति निर्णयः ॥

---

१. 'रम्', २. 'वर्तते' घ. पाठः.

कार्ययोगो यदि द्वन्द्व उभयोरपि दृश्यते ।
स्थिते पूर्वपदस्यार्थे द्वितीयस्यापि सङ्ग्रहः ॥
अन्तोदात्तस्ततो द्वन्द्व इन्द्रवायू बृहस्पतिम् ।
ऋक्सामभ्यामभिहिताविहेन्द्राग्नी उपह्वये ॥
समप्रधानयोर्द्वन्द्व उदात्त उभयोरपि ।
द्यावापृथिवी मरुतो ह्वयामि मित्रावरुणौ ॥
प्रधान इन्द्रः पूर्वोऽत्र प्रधानः क्वचिदुत्तरः ।
स सोमारुद्रयोर्द्वन्द्वो मासहूतीति दर्शनम् ॥
बहुव्रीहिषु तात्पर्यं विशेषणविशेष्ययोः ।
अग्निर्होता कविक्रतुरग्ने सूपाय नो भव ॥
मित्रं हुवे पूतदक्षं शं नो विष्णुरुरुक्रमः ।
पञ्चपादं सप्तचक्रं त्रिचक्रेण त्रिनाभि च ॥
उदात्तश्चोभयोर्दृष्टः पूर्वस्मिन्नपि चोत्तरे ।
उदात्तानुगुणश्चा[1]र्थो दर्शनीय इति स्थितिः ॥
अन्तोदात्तोऽव्ययीभावः सोऽनुकामं तर्पयेथाम् ।
प्रतिदोषं गृणानश्च तादृशाः सन्ति चापरे ॥
अनुकामं विभक्त्यर्थे नानोरर्थोऽस्ति कश्चन ।
पश्चात्कामस्य यद्वा[2]स्तु तथाप्यन्ते स्वरो भवेत् ॥
प्रतिदोषं गृणानोऽत्र वीप्सां द्योतयति प्रतिः ।
दोषाशब्दो वाचकश्च ततस्तस्मिन् स्वरः स्थितः ॥
अथ विग्रहवाक्यानि विस्पष्टप्रतिपत्तये ।
सुरूपकर्मणां कर्ता पुरूणां च तथा प्रियः ॥
भाग्येन यं तु सम्भक्तो विप्रैराकृष्यते तथा ।
तव सख्यं न हिंसितमयोद्धेत्यस्य विग्रहः ॥
न यः समर्थो युद्ध इति युद्धासामर्थ्यदर्शनम् ।
प्रधान इन्द्रो वायुश्च मित्रश्च वरुणोऽपि च ॥
अग्नेः क्रतुः कविः क्रान्तो बहुव्रीहेस्तु विग्रहः ।
इ[3]ति ...... सिन्तमो यस्य त्रीणि चक्राणि सन्ति च ॥
कामेषु तर्पयेथां नः पश्चात् कामस्य वा पुनः ।
रात्रौ रात्रौ प्रतिदोषमिति विग्रहदर्शनम् ॥
सर्वेष्वेषु समासेषु यत्र यत्र स्वरो भवेत् ।
काशं कुशं वावलम्ब्य स्वरं तं स्थापयेदिति ॥

---

१. 'त्तमनुदात्तार्थो', २. 'स्तु' ख. पाठः. ३. 'उत्तरासि' ग. पाठः.

एतायाम । हिरण्यस्तूपः । सोऽस्माकमनेकार्थाभिलाषिणीं मतिं सुष्ठु वर्धयति । हिंसकवर्जितः उपगमनानन्तरमस्य धनस्य बह्वावर्जयति । तदेवाह — 'गवां सङ्कुविदावर्जयती'ति ॥ १ ॥

**उपेदहंधनदामप्रतीतंजुष्टांनश्येनोवसतिंपतामि ।**

**इन्द्रंनमस्यन्नुपमेभिरर्कैर्यःस्तोतृभ्योहव्योअस्तियामन् ॥**

उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न । श्येनः । वसतिम् । पतामि । इन्द्रम् । नमस्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृऽभ्यः । हव्यः । अस्ति । यामन् ॥ २ ॥

## स्कन्दस्वामीयम् ।

उपशब्दः पतामीत्याख्यातेन सम्बन्धयितव्यः । इच्छब्दः पदपूरणः । अहं धनदां धनस्य दातारमप्रतीतम् अप्रतिगतम् । शत्रुभिः[1] अप्रत्यभिभूत-पूर्वमित्यर्थः । जुष्टां न श्येनो वसतिं यथा प्रियां वसतिं निवासस्थानं श्येन उपपतेदेवमुपपतामि उपगच्छामि । कम् । इन्द्रं नमस्यन् परिचरन् । कीदृशैः । उपमेभिः । उप[3]म इत्यान्तिकनाम । सन्निकृष्टैरिन्द्रस्य योग्यैरित्यर्थः । कैः । अर्कैः मन्त्रैः । मन्त्रैः स्तुवन्नित्यर्थः । यः कीदृगिन्द्रः । उच्यते । यः स्तोतृभ्यः । षष्ठ्यर्थे चतुर्थ्येषा । स्तोतॄणाम् । हव्यः आह्वातव्यः । अस्ति भवति । यामन् अधिकरणेऽयं मनिर्द्रष्टव्यः । यन्ति देवता अस्मिन्निति यामा यज्ञः तत्र ॥ २ ॥

## वेङ्कटमाधवीयम् ।

उपेदहम् । उपैव पताम्यहं धनस्य दातारं शत्रुभिरप्रतिगतं सेन्द्रमर्चयन्नुपमान-भूतैः (मन्त्रैः) । य इन्द्रः स्तोतृभ्यो हव्यो भवति यज्ञेऽहनि चेति ॥ २ ॥

**निसर्वसेनइषुधींरसक्तसमर्योगाअजतियस्यवष्टि ।**

**चोष्कूयमाणइन्द्रभूरिवामंमापणिर्भूरस्मदधिप्रवृद्ध ॥ ३ ॥**

नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्य । वष्टि । चोष्कूयमाणः । इन्द्र । भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥

---

१. 'भिः प्र' क. ख. पाठः, २. 'ज्ञा' ख. पाठः. ३. 'प इ' क. ख. पाठः.

स्कन्दस्वामीयम् ।

सर्वसेनः समग्रया सेनयोपेतः । इषुधीन् तूणान् निअसक्त । 'षञ्ज सङ्गे' । निषजति । आत्मनः पृष्ठे रथे वा निबध्नातीत्यर्थः । निषज्य च अर्य ईश्वरः इन्द्रः शत्रूणां स्वभूता गाः समजति । 'अज गतिक्षेपणयोः' । समुत्क्षिपति स्वराष्ट्रं प्रति प्रेरयति अपहरतीत्यर्थः । यस्य वष्टि क्षेप्तुं कामयते । यस्मै स्वाश्रिताय दातुमिच्छति तस्मै ददातीत्यर्थः । अथवा गावोऽत्रापोऽभिप्रेताः । निषज्येषुधीन् मेघं[1] प्रत्नपः सम्यक् क्षिपति । यस्य राज्ञो यजमानस्य वा क्षेप्तुं कामयत इत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतः । पूर्वस्माद् भिन्नं वाक्यम् । चोष्कूयमाणः । 'स्कुञ् आप्रवणे' अन्यत्र । इह तु भूरि वामं मा पणिर्भूरित्येतैः सम्बन्धाद् दानार्थः । अत्यर्थं पुनः पुनर्वा ददत् । हे इन्द्र ! भूरि बहु वामं वननीयमत्यन्तोत्कृष्टं धनं मा पणिर्भूः । पणिर्वणिगुच्यते । तेन चात्र स्वगतमल्पदत्वं लक्ष्यते । माल्पदो भूरित्यर्थः । अस्मदधि अस्माकमु[2]परि । अस्मभ्यं माल्पं दा इत्यर्थः । हे प्रवृद्ध ! वीर्येण[3] शरीरेण वा ॥ ३ ॥

वेङ्कटमाधवीयम् ।

निसर्वसेनः । निषजति समग्रया सेनयोपेत इषुधीनात्मपृष्ठे । अथ च समजतीश्वरः पशून् तस्मै शत्रुभ्यो यस्य शत्रुभिरपहृतानाभक्तु[4]मिच्छति । ददिन्द्र ! बहु वननीय धनं मा पणिर्भूरस्मासु प्रवृद्ध ! । पणिः पणनात् । कारणमनवेक्ष्य देहीति ॥ ३ ॥

**वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।**
**धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥**

वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् । उपऽशाकेभिः । इन्द्र । धनोः । अधि । विषुणक् । ते । वि । आयन् । अयज्वानः । सनकाः । प्रऽइतिम् । ईयुः ॥ ४ ॥

स्कन्दस्वामीयम् ।

ते व्यायन्निति तच्छब्दश्रुतेर्यच्छब्दोऽत्राध्याहार्यः । उत्तरार्धर्चस्थैश्च भूयोभिर्बहुवचनान्तैः सामानाधिकरण्याद् दस्युं धनिनमिति बहुवचनस्य स्थाने

---

१. 'घ' क. ख. पाठः. २. 'मपि' । ख. पाठः. ३. 'सेनालक्षणेन बलेन श', ४. 'नापभ' ग., 'नां भ' घ. पाठः.

त्वम्। एतान्। रुदतः। जक्षतः। च। अयोधयः। रजसः। इन्द्र। पारे। अव। अदहः। दिवः। आ। दस्युम्। उच्चा। प्र। सुन्वतः। स्तुवतः। शंसम्। आवः॥ ७॥

## स्कन्दस्वामीयम्।

त्वमेतानसुरान् मेघान् वा। रुदतो जक्षतश्च। 'जक्ष भक्षहसनयोः'। रुदतो हसतश्च। सर्वास्ववस्थासु वर्तमानानित्यर्थः। अयोधयः योधितवानसि। रजसः। लोकनामैतत्। अन्तरिक्षलोकस्य द्युलोकस्य वा। हे इन्द्र! पारे अन्तेऽवस्थितान्। भयादन्तरिक्षस्य दिवो वा अन्तान्नष्टानपि सत इत्यर्थः। अवादहः। अवशब्दः अधोभागे। दहतिरप्यत्र सामर्थ्यान्निर्धमनार्थः। अधो निरधमः निर्धमसि वा। दिवः द्युलोकात्। आकारस्तु पदपूरणः। दस्युं शत्रून्। उच्चा उच्चैरप्यवस्थितम्। किञ्च, सुन्वतः स्तुवतश्च[1] यजमानस्य शंसं कामम्। प्रावः प्रकर्षेण तर्पितवानसि, तर्पयसि वा॥ ७॥

## वेङ्कटमाधवीयम्।

त्वमेतान्। त्वमेतानव्रतान् रुदतो हसतश्च पृथिव्याः पारे योधितवानसीन्द्र!। तदानीमुच्छ्रितात् दिवोऽसुरमानीतवानसि। सुन्वतः स्तुवतश्च प्रार्थनां प्रकर्षेणारक्षः॥ ७॥

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण॥ ८॥

चक्राणासः। परिऽनहम्। पृथिव्याः। हिरण्येन। मणिना। शुम्भमानाः। न। हिन्वानासः। तितिरुः। ते। इन्द्रम्। परि। स्पशः। अदधात्। सूर्येण॥ ८॥

१. 'श्च यः' ख. पाठः. २. 'ह' क. ख. पाठः. ३. 'तः य' ग. पाठः.

अयातयन्त[1]। यातयतिर्वधकर्मा। स्वार्थिकश्चात्र णिच्। हतवन्तः[3]। णिच्छ्रु[4]-तिसामर्थ्यादिन्द्रेण घातितवन्तः। के। क्षितयो मनुष्याः। कतमे। नवग्वाः। 'अङ्गिरसो नः पितरो नवग्वा' इति सामानाधिकरण्यदर्शनादङ्गिरसोऽत्र नवग्वा इत्युच्यन्ते। ते किल तपस्यन्तो नवभिर्मासैः[5] सिद्धिं गताः। ते कांश्चिदयात-यन्त। केचित्तु वृषायुधो न वध्रयो निरष्टाः। वृषः प्रजननसमर्थो बलवान् वृषभः। तेन सह ये युध्यन्ते ते वृषायुधः। नशब्द उपमायाम्। वध्रयः प्रजननासमर्था दुर्बला बलीवर्दाः। निर्गता अष्टाभ्यो निरष्टाः पतितदर्शनाः[6] अत्यन्तवृद्धा बलीवर्दाः। ये वध्रयो निरष्टाश्च वृषेण सह युयुत्सन्ते, यथा ते ताडिता अत्यन्तपराङ्मुखा नश्येयुः, तद्वत्। प्रवद्भिः प्लवमानैरत्यन्तशीघ्रगति-भिरश्वै रथैर्वा[8]। इन्द्राच्चितयन्तः जानन्तः। किम्। सामर्थ्यादिन्द्रस्य पराक्रमम्। अथवा 'चित सञ्चोदने' इत्यस्य चितयन्त इति रूपम्। चोदयन्तोऽश्वान्। आयन् आगमन् नष्टा इत्यर्थः। अथवा निरष्टा इत्येतद् 'अशू व्याप्ताावि'त्ये-तस्य रूपम्। प्रवद्भिरित्येतेन च सम्बध्यते। प्रवद्भिरित्येतच्चाङ्गिरोविषयम्। यथा वृषेण सह युयुत्समाना वध्रयस्तेन व्याप्ता नश्येयुरेवं निरष्टा निश्चयेन व्याप्ताः प्रवद्भिः प्लवमानैरत्यन्तशीघ्रगतिभिरङ्गिरोभिः। यस्यानुचराणामृषीणा-मीदृशः पराक्रमः, सः स्वयमसह्यपराक्रम इत्यङ्गिरःपराक्रमादेवेन्द्रस्य पराक्रमं जानन्तश्चोदयन्तो वाश्वान् स्वानप्राप्तादेवेन्द्रादायन् गता नष्टाः। य इन्द्रसेना-मयुयुत्सन् ते केचिद्धताः केचिन्नष्टा इति समस्तार्थः॥ ६॥

वेङ्कटमाधवीयम्।

अयुयुत्सन्। अयुयुत्सन्नवद्यरहितां सेनामव्रताः[7]। अथैनमिन्द्रं नवग्वाः क्षितयो युद्धार्थं निरगमयन्। अथ ते वृषायुधश्छिन्नवृषणा इव वार्धक्यादवस(ष्ट? ष्टा)[8][9]: साण्डेन युध्यमानाः प्रकर्षगमनवद्भिरश्वैः बलवानिन्द्र इति जानन्तो युद्धात् प्रग-ता(म?)[10]ः॥ ६॥

**त्वमे॒तान्रु॑द॒तो जक्ष॑त॒श्चायो॑धयो॒ रज॑स इन्द्र पा॒रे।**
**अवा॑दहो दि॒व आ दस्यु॑मु॒च्चा प्र सु॑न्व॒तः स्तु॑व॒तः शंस॑मावः॥ ७॥**

१, 'न्त यांत यात' ख. पाठः. २. 'धे', ३. 'ता' क. ख., पाठः. ४. 'च्चे' ग. पाठः. ५ 'वांसीः सि', ६. 'शे', क., ख. पाठः. ७. 'ताम्', ८. 'द्भिः रथैः ब' ग. पाठः. ९. 'प्रता' ख. पाठः. १०. 'मा' घ. पाठः.

## स्कन्दस्वामीयम् ।

चक्राणासः कुर्वन्तः । परिणहं पृथिव्याः । 'णह बन्धने' । सर्वतो बध्यते येन पृथिवी स पृथिव्याः परिणहः खातप्राकारादिकम् । दुर्गाणि कुर्वन्त इत्यर्थः । हिरण्येन मणिना शुम्भमानाः शोभयन्तः । किम् । सामर्थ्यम्। स्वाभिः कृतरक्षाभिधानाः आस्थावन्तश्च सन्त इत्यर्थः । न हिन्वानासस्तितिरुस्ते । हिनोतिर्वृद्ध्यर्थः । तिरतिः शक्नोत्यर्थः । शक्नोतेश्च कर्मभूतधात्वन्तरानुषङ्गस्य नित्यत्वात् प्रतियोद्धुमिति वाक्यशेषः । त इत्यसुराणां प्रतिनिर्देशः । सर्वप्रकारं वर्धमाना असुरा नैवाशक्नुवन् प्रतियोद्धुमित्यर्थः । कम् । इन्द्रम् । कस्मात् । उच्यते । यस्मात् तत्पुरेषु परि स्पशो अदधात् पर्यदधात् सर्वतो निहितवान् इन्द्रः । स्पशो (बाध)कान्न केवलं, किन्तर्हि, सूर्येण सह । अन्यैरपि देवैः सम्मन्त्र्येत्यर्थः । यस्माच्चारचक्षुर्मन्त्रशक्तियुक्तश्चेत्यर्थः ॥ ८ ॥

## वेङ्कटमाधवीयम् ।

चक्राणासः । कुर्वाणा आच्छादनं महत्तया पृथिव्या हिरण्मयेनालङ्कारेण शोभमानास्त इन्द्रं प्रतिगच्छन्तो न तीर्णवन्तः । सोऽयं सूर्येण सह परितो रश्मीन् निहितवान् ॥ ८ ॥

**परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम् ।**
**अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ॥ ९ ॥**

परि । यत् । इन्द्र । रोदसी इति । उभे इति । अबुभोजीः । महिना । विश्वतः । सीम् । अमन्यमानान् । अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युम् इन्द्र ॥ ९ ॥

## स्कन्दस्वामीयम्।

यदिति प्रथमा । व्यत्ययेन तु नपुंसकम् । यस्मादर्थे वा । यस्त्वं यस्माद् वा । हे इन्द्र ! रोदसी उभे । पर्यबुभोजीः । 'भुज पालनाभ्यवहारयोः' । परिपालयसि भुङ्क्षे वा । महिना महता वीर्येण । विश्वतः सर्वतः । सीमिति तु पदपूरणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स तस्माद् वा । अमन्यमानान् ।

१. 'प्र', २. 'ध्यात्' क. ख. पाठः.

मन्यतिरर्चतिकर्मा । अस्तुवतः । अभिमन्यमानैः अभिष्टुवद्भिः[1][2] । केन । ब्रह्मभिः ऋग्यजुःसामलक्षणैः । निरधमः । धमतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । ण्यन्तश्चापकालयतेरर्थे वर्तते । स्वस्मात् स्थानादपकालयसीत्यर्थः । दस्युम् । अमन्यमानानिति बहुवचनसामानाधिकरण्याद् बहुवचनस्य स्थान इदमेकवचनम् । दस्यून् अ(न)भिष्टुवतः शत्रून् । हे इन्द्र ! । 'इदि परमैश्वर्ये' । अत्यन्तेश्वर ! ॥ ९ ॥

## वेङ्कटमाधवयिम् ।

परि यदिन्द्र । इन्द्र ! त्वं माहात्म्येनान्याञ्छत्रून् हत्वा द्यावापृथिव्यावुभे अपि सर्वतः पर्यबुभोजीः निःसपत्नमभुङ्क्थाः । तदानीमङ्गिरोभिः प्रयुज्यमानैरमन्यमानानव्रतानभिमन्यमानैर्मन्त्रैर्दिवः शत्रून् निरधमः ॥ ९ ॥

**नयेदि॒वःपृ॑थि॒व्याअन्त॑मा॒पुर्नमा॒याभि॑र्धन॒दांपर्य॒भू॑व॒न् ।**

**यु॒जंवज्रं॑वृष॒भश्च॑क्र॒इन्द्रो॒निर्ज्योति॑षा॒तम॑सो॒गाअ॑दुक्षत्**

[ ॥१०॥ २॥

**न । ये । दि॒वः । पृ॒थि॒व्याः । अन्त॑म् । आ॒पुः । न । मा॒याभि॑ः । ध॒न॒ऽदाम् । प॒रि॒ऽअभू॑वन् । यु॒जम् । वज्र॑म् । वृ॒ष॒भः । च॒क्रे । इन्द्र॑ः । निः । ज्योति॑षा । तम॑सः । गाः । अ॒धु॒क्ष॒त् ॥ १० ॥ २ ॥**

## स्कन्दस्वामीयम् ।

येऽप्यसुरा दिवः पृथिव्याश्चान्तं नापुः न प्राप्नुवन्ति । द्यावापृथिव्योरेकदेशवर्त्तिन इत्यर्थः । नापि मायाभिः प्रज्ञाभिः धनदां[3] पर्यभूवन् परिभवन्ति । इन्द्रात् प्रज्ञया न्यूना इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि सह । युजं सम्बन्धं वृषभः वर्षिता चक्र इन्द्रः । तानपि वज्रेण हतवानित्यर्थः । हत्वा च ज्योतिषा सौरेण वैद्युतेन वा । तमसः यत्र गुहादौ तमोरूपेण स्थापितास्ततस्तैस्तेषामसुराणां स्वभूता गा निरधुक्षत् निर्दग्धवान् निष्कालितवानित्यर्थः । अथवा य इति मेघानां प्रतिनिर्देशः । गा अधुक्ष-

---

१ 'ष्टु', २. 'द्भिः ऋ' क ख. पाठः. ३. 'दाम् इन्द्रं प' ग. पाठः. ४. भ.' क. ख. पाठः.

दित्यपि गोशब्द उद(क ? कनामा)। यऽपि मेघा द्यावापृथिव्योरेकदेशवार्त्तिनः इन्द्राञ्च न्यूनप्रज्ञास्तानपि वज्रेण हतवान्। हत्वा च वैद्युतेन ज्योतिषा तदीयात् तमसः अपो निरधुक्षत क्षारितवान्॥ १०॥

वेङ्कटमाधवीयम्।

न ये दिवः। या आपो दिवः पृथिव्या अन्तं नापुर्न कर्मभिर्धनस्य दातारमिन्द्रं परितोऽभवन्। तेषां जयार्थं सहायं वज्रं वर्षितेन्द्रश्चक्रे। ततो ज्योतिषा गा अपस्तमसो मेघात् निरधुक्षद् दस्युं हत्वेति॥ १०॥

इति प्रथमस्य तृतीये द्वितीयो वर्गः।

---

अनु॑स्व॒धाम॑क्षर॒न्नापो॑अ॒स्यावर्ध॑त॒मध्य॒आना॒व्या॑नाम्।

स॒ध्रीची॑नेन॒मन॑सा॒तमिन्द्र॒ओजि॑ष्ठेन॒हन्म॑नाहन्न॒भिद्यून्॥ ११॥

अनु॑। स्व॒धाम्। अ॒क्ष॒र॒न्। आपः॑। अ॒स्य॒। अव॑र्धत। मध्ये॑। आ। ना॒व्या॑नाम्। स॒ध्रीची॑नेन। मन॑सा। तम्। इन्द्रः॑। ओजि॑ष्ठेन। हन्म॑ना। अ॒ह॒न्। अ॒भि। द्यून्॥ ११॥

स्कन्दस्वामीयम्।

अनुशब्दो लक्षणे कर्मप्रवचनीयः। स्वधेत्युदकनाम। यत् पूर्वपतितमुदकं तत् प्रति अक्षरन् क्षरितवत्यः क्षरन्ति वा। आपः अस्येन्द्रस्य स्वभूताः प्रसादेन वा। अनुपक्षीणायां मेघपूर्ववृष्टौ पुनरपि (अवर्षत ?) वर्षति स्मेत्यर्थः। (अथवा) अन्विति पश्चाद्भागे। स्वधेत्यप्यन्ननाम। अस्येत्येतच्च स्वधामित्येतेन सम्बध्यते। अस्य स्वभूतां हविर्लक्षणां स्वधामनु तदीयस्य हविषः पश्चाद्, यदास्मै हविर्दीयते तद्दानानन्तरमित्यर्थः। किमक्षरन्। आपो वृष्टिलक्षणाः। कथं पुनर्मेघेन निरुद्धाः सत्योऽक्षरन्। अवर्धत मध्ये आ। आ इत्येष अवेत्येतस्य स्थाने। सध्रीचीनेन मनसा। तमिति तच्छब्दाद् यच्छब्दोऽत्राध्याहार्यः[1]। यो मेघो वृष्टिनिरोधाभिप्रायेणावर्धत मध्येऽवस्थितानामपाम्[2] अवाधः। कियतीनाम्। नाव्यानाम्। नावा तार्याणाम्। अत्यन्तबह्वीनामित्यर्थः। सध्रीचीनेन। सह अञ्चति

---

१. 'ब्दोऽध्या' ख. पाठः. २. 'मेघा' ग. पाठः.

गच्छतीति सध्रीचीनो वज्रस्तेन सध्रीचीनेन सहगामिना वज्रेण । केन सहगामिना । मनसा । यत्रैव मनो गच्छति तत्रैव ग(न्ता ? न्त्रा) । यत्र मनऽष्यते तत्रैव निप(ति ? त)तेत्यर्थः । तं मेघम् इन्द्रः । कीदृशेन वज्रेण । ओजिष्ठेन । बलवत्तमेन । हन्मना हन्त्रा मेघानाम् । अहन् हतवान् । अभिद्यून् दिवसान् प्रति । येषु वार्षिकेष्वहस्सु हन्तुं योग्यस्तेष्वित्यर्थः ॥ ११ ॥

## वेङ्कटमाधवीयम् ।

अनुस्वधा । वृत्रे हते इन्द्रस्यापः स्वसारं मध्वक्षरन् । अयं चेन्द्रो नावा तार्यमाणा(ना)मपां मध्येऽवर्धत । सहायभूतनाब्रु(?)णेन धृष्टेन मनसा बलवत्तमेन हननसाधनेन हतवानसुरं दिवसेष्विति[1] ॥ ११ ॥

**न्याविध्यदिलीबिशस्य दृह्ळा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।**

**यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥ १२ ॥**

नि । अविध्यत् । इलीबिशस्य । दृह्ळा । वि । शृङ्गिणम् । अभिनत् । शुष्णम् । इन्द्रः । यावत् । तरः । मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥ १२ ॥

## स्कन्दस्वामीयम् ।

कस्यचित् तान् न्याविध्यत् निष्कृष्य विद्धवान् । कस्य । इलीबिशस्य इलीबिशो मेघः । कथम् । इळेत्यन्ननाम । बिशशब्दो बिस्यतेः । बिस्यतिर्भेदनकर्मा वृद्धिकर्मा वा । एवं ह्याह — "बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वे"ति । अथवा (बिस्यतिः ?) "बिस्यति मिस्यती"ति गमिकर्मसु पाठाद् बिस्यातिर्गत्यर्थः । बीजरूपमन्नमुद्भिनत्ति वर्धयति उदकरूपो वा भूत्वा गच्छतीतीळाबिसः । इलाबिसः सन्निळीबिश उच्यते । छान्दस ईकारः शकारश्च । अथवा इळाशब्दोऽत्रान्नहेतुत्वादुदके वर्तते । बिशशब्दोऽप्येकदेशलोपेन बिलशयशब्दस्यार्थे । अन्नहेतोरुदकस्य बिलेषु शेते । तान्यप्यावृत्य तिष्ठतीतीळीबिशो मेघः तस्य । दृह्ळा दृढानि दुर्व्यथ(?)नि । कानि । सामर्थ्यादुदकनिर्गमनबिलानि । कञ्चित्तु शृङ्गिणं दीप्तिमन्तं मेघं व्यभिनत् विविधं भिन्नवान्, विदारितवानित्यर्थः । शुष्णम् । बलनामैतत् । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । बलवन्तम् । कः । इन्द्रः । कस्यचिन्मेघस्य बिलान्युद्घाटितवान्, कञ्चित्तु शत-

1. 'षु तेष्विति' ग पाठः. २ 'वे' क. ख, पाठः.

शर्करं भग्नवानित्यर्थः । अथवा 'शुष्णं पिप्रुं कुयवं वृत्र'मित्यादिषु दर्शनात् शुष्णो नामासुरः । तं विविधं भिन्नवान् विदारितवान् मारितवानित्यर्थः । शुष्ण-सम्बन्धाच्चेलीबिशोऽप्यसुर एव । तस्य स्वभूतानि दृढानि पुराणि निरविध्यत् । 'व्यध ताडने' । निर्भिद्य ताडितवान् , हतवानित्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । यावत् तरः शरीरसामर्थ्यं बलं हे मघवन् ! धनवन्[1] ! यावच्च ओजः सेनालक्षणं बलम् । यावदित्युद्देशात् तच्छब्दोऽध्याहार्यः । [2]तेन सर्वेण वज्रेण त्वं शत्रुमवधीः, अस्मदीयं वा जहि पृतन्युं सङ्ग्राम-कामम् ॥ १२ ॥

### वेङ्कटमाधवीयम् ।

न्याविध्यत् । निरविध्यदुदकस्य निर्गमद्वारमावृत्य शयानस्य दृढानि द्वाराणि मेघस्य, तेजस्विनं शुष्णासुरं च व्यभिनदिन्द्रः । यावद् वेगो यावच्च बलं मघवन् ! तत् सर्वमादाय पृतनाकामं शत्रुं शुष्णमवधीः ॥ १२ ॥

**अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् ।**
**सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥**

अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥

### स्कन्दस्वामीयम् ।

सिध्मः साधयितेन्द्रः अभ्याजिगात् अभिगतवान् । किम् अस्यै-[3]वेन्द्रस्य शत्रून् । अथवा सिध्म इति वज्र उच्यते । साधयिता[4] वज्रः अभ्यजिगादस्येन्द्रस्य शत्रून् । अभिगतेन च वज्रेण तिग्मेन तीव्रेण वृषभेण वर्षित्रा[5] शत्रूणां स्वभूताः पुरो नगराणि व्यभेत् विविधं भिन्नवान् , विनाशितवा-नित्यर्थः । किञ्च संवज्रेणासृजत् समसृजत् संवार्जितवान् संबन्धितवानित्यर्थः । कम् । वृत्रमसुरम् । कः इन्द्रः । प्र स्वां मतिमतिरत् । मतिमिति मन्यतेरर्चति-कर्मणो रूपम् । अतिरदित्यपि तिरतिर्वृद्ध्यर्थः । आत्मीयां स्तुतिं प्रकर्षेणा-वर्धयत् । शाशदानः पुनःपुनरसुरांस्तत्पुराणि च शातयन् । यो हीदृशं कर्म

१. 'वन् से', २ 'तें स', ३. 'अप वज्र', ४. 'ता अ', ५. 'ता' क. ख. पाठः,

पुनः पुनः करोति स तत्कर्मसम्बद्धाः[2] आत्मीयस्तुतीर्वर्धयति। अथवा मतिरिति प्रज्ञैवोच्यते, स्वप्रज्ञामवर्धयदिति। यो हि यन्नित्यं करोति तस्य तत्र प्रज्ञाकौशलं वर्तते॥ १३॥

वेङ्कटमाधवीयम्।

अभिसिध्मः। साधयिता कर्मणामिन्द्रोऽस्य शुष्णस्य शातयितव्यान् सहाया-नभ्याजिगात्, व्यभिनच्च वज्रेण कामानां वर्षित्रा पुराणि। वृत्रं च वज्रेण समयोजय-दिन्द्रोऽवर्धयत् स्वां मतिं शत्रुपुराणि शातयन्॥ १३॥

आवःकुत्समिन्द्रयस्मिञ्चाकन्प्रावोयुध्यन्तंवृषभंदशद्युम्।
शफच्युतोरेणुर्नक्षतद्यामुच्छ्वैत्रेयोनृषाह्यायतस्थौ॥ १४॥

आवः। कुत्सम्। इन्द्र। यस्मिन्। चाकन्। प्र। आवः। युध्यन्तम्। वृषभम्। दशऽद्युम्। शफऽच्युतः। रेणुः। नक्षत। द्याम्। उत्। श्वैत्रेयः। नृऽसह्याय। तस्थौ॥ १४॥

स्कन्दस्वामीयम्।

आवः कुत्सम् अरक्षस्त्वं कुत्सनामानम्। यस्मिन् कुत्से यागं कुर्वति। चाकन् कामितवानसि सोमं स्तुतीश्च। न च केवलं कुत्सम्। किं तर्हि, प्रावः प्रकर्षेणारक्षः युध्यन्तं युध्यमानं वृषभं नामापरं राजानं दशद्युं बहुदी-प्तिम्। केन प्रकारेण। उच्यते। शफच्युतः शफेभ्यः प्रच्युतो रेणुः पांसुः नक्षत। नक्षतिर्गत्यर्थो व्याप्तिकर्मा वा। गतवान् व्याप्तवान् वा द्यां द्युलोकम्। उच्छ्वै-त्रेयः। उच्छब्दः तस्थावित्याख्यातेन सम्बन्धयितव्यः। शु इति क्षिप्रनाम। इण् गतौ। शु इत्रा श्वित्रा आशुगामिनी जगतः प्रकृतिः। तस्या अपत्यं श्वैत्रेयो वायुः। स च नृषाह्याय शत्रुमनुष्याभिभवनाय। उत्तस्थौ उत्थितः। शत्र्वभिभ-वार्थं युद्धवेलायां महान्तं रेणुं वात्याश्चाकरोदित्यर्थः॥ १४॥

वेङ्कटमाधवीयम्।

आवः कुत्सम्। रक्षितवानसि कुत्समिन्द्र! यस्मिन् कुत्से स्तुतीः कामितवानसि। प्रावश्च युध्यन्तं स्तुतीनां वर्षितारं दशद्युं नाम। युद्धे शफैश्च्युतो रेणुरन्तरिक्षं नक्षत प्रवृद्धमासीद् युद्धम्। अथ श्वित्रायाः पुत्रो दशद्युस्त्वयोपबृंहितः शत्रूणमभिभवाय कस्मिंश्चित् ह्रदे भयात् प्रविष्टस्तत उत्तस्थौ। अस्योत्तरा भूयसे निर्वचनाय आवश्शममिति॥ १४॥

---

१. 'द्धात्मी', २. 'ति' क. ख. पाठः.

आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक्चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५ ॥

आवः । शमम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकः ॥ १५ ॥

स्कन्दस्वामीयम् ।

आवः शमं शान्तात्मकं वृषभं नाम राजानं तुग्र्यासु । तुग्र्या इत्युदक नाम । सप्तमीनिर्देशाच्च स्थितमिति वाक्यशेषः ।अप्सु स्थितम् अद्भ्य उत्तारितवानसीत्यर्थः । किमर्थम् । क्षेत्रजेषे । क्षेत्रशब्देनात्रैकदेशवचनेन समस्ता पृथिवी लक्ष्यते । पृथिवीजयाय । अद्भ्य उत्तारितः पृथिवीं जेष्यतीत्येवमर्थम् । हे मघवन् ! कीदृशम् । श्वित्र्यं गां गन्तारं देवान् शत्रून् वा प्रति । ज्योक्चित् ज्योगिति निपातश्चिरवचनः । चिच्छब्दः पदपूरणः । एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽत्राध्याहार्यः । यं वृषभं चिरम् अत्र पृथिव्यां तस्थिवांसः स्थिताः प्रतिष्ठितास्तच्छत्रवोऽसुराः अक्रन् । करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपणे वर्तते । अप्सु प्रक्षिप्तवन्तः । यं पृथिव्यां चिरं प्रतिष्ठिता अपि सन्तः शत्रवोऽसुरा वा राज्योच्छेदनभयादप्सु प्रक्षिप्तवन्त इत्यर्थः । उत्तार्य च शत्रूयतां शत्रुभावं कामयमानानां तेषां यानि स्वभूतानि वेदनानि । अपाठितमपि धननामैतत् । धनानि तानि । अधरा अधराणि । अकः कृतवानसि । शत्रुधनानि तस्यायत्तान्यकरोदित्यर्थः ॥ १५ ॥

वेङ्कटमाधवीयम् ।

(आवः शमम् ।) बलेनावाक्छान्तं वृषभमुदकेषु भयाद् गतं पृथिवीजयार्थं श्वित्राया अपत्यं दशशुमावः । चिरं तस्मिन् स्थिताः शत्रवः कृतवन्तो युद्धम् । अथ तेषां शत्रुत्वमिच्छतामुपद्रवाण्यधराणि चकारेति ॥ १५ ॥

इति प्रथमस्य तृतीये तृतीयो वर्गः ॥

---

१. 'त्रामि' क पाठः ।

त्रिश्चि॒न्नो॑ अ॒द्या भ॑वतं नवेदसा वि॒भुर्वां॒ याम॑ उ॒त रा॒तिर॑श्विना ।
यु॒वोर्हि य॒न्त्रं हि॒म्येव॒ वास॑सोऽभ्याय॒ंसेन्या॑ भवतं मनी॒षिभिः॑ ॥

त्रिः । चि॒त् । नः॒ । अ॒द्य । भ॒व॒त॒म् । न॒वे॒द॒सा॒ । वि॒ऽभुः । वा॒म् । याम॑ः । उ॒त । रा॒तिः । अ॒श्वि॒ना॒ । यु॒वोः । हि । य॒न्त्रम् । हि॒म्याऽइ॑व । वास॑सः । अ॒भि॒ऽआ॒य॒ंसेन्या॑ । भ॒व॒त॒म् । म॒नी॒षिऽभिः॑ ॥ १ ॥

## स्कन्दस्वामीयम् ।

'तत आश्विनम्'। ये एते ऐन्द्रे सूक्ते उक्ते, ताभ्यां परमिदमाश्विनम् । त्रिश्चित् । त्रिशब्दोऽत्र सर्वत्र त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वाद् बहुकृत्व इत्यस्यार्थे । बहुकृत्वः । चिच्छब्दस्तु पदपूरणः । नः अस्मान् अद्य भवतम् । भवतिरिह प्राप्त्यर्थः । प्राप्नुतम् । हे नवेदसा ! मेधाविनौ ! बहुकृत्वोऽद्याऽस्मत्समीपमागच्छतमित्यर्थः । किं कारणम् । उच्यते । यस्माद् विभुर्गमनसमर्थः । वां युवयोः यामः । यान्त्येतेनेति यामो रथ इहोच्यते । "अक्ष वीळो वीळितवीळयस्व मा यामादस्मादवजीहिपो नः" इति यथा । उत रातिः । उतशब्दोऽप्यर्थे । रातिशब्दोऽपि कर्मसाधनो देयवचनः । देयमपि विभु । हे अश्विनौ ! यदागत्यास्मभ्यं धनं दास्यथस्तदपि प्रभूतमित्यर्थः । युवोर्हि यन्त्रम् । हिशब्दो यस्मादर्थे । यस्माच्च युवयोः स्वभूतं यन्त्रमपि विभु । येन यन्त्रेण युवां शत्रून् हथः, तदपि सर्वगमनप्रतिबन्धकम् । हिम्ये(व वाससोऽभ्या) यंसन्या भवतम् । हिमेति रात्रिनाम । तत्र भवा हिम्या उषाः । वास इत्यपठितमप्यहर्नाम । "आद्रात्रिवासस्तनुते सिमस्मै" इति यथा । अभ्यायंसेन्येत्यभ्याङ्पूर्वस्य सेन्यशब्दस्य कर्तरि प्रत्ययः । यथोषाः अह्नः, आभिमुख्येन यन्तारौ भवतम् । कस्य । सामर्थ्याद् रथस्य । यथोषा नियमेनाहरुत्पत्त्याभिमुखं करोति, एवं युवां नियमेन रथमस्मदभिमुखं कुरुतं, येनासावस्मत्समीपमागच्छतीत्यर्थः । अथवा अभ्यायंशब्दः क्विबन्तः । से(ना[2]न)या अभ्यायन्तारौ अभ्यायं (सेनौ) । राजदन्तादित्वात् परनिपातः । अभ्यायंसेनावेवाभ्यायंसेन्यौ । स्वार्थिको यत्प्रत्ययः । स्वसेनया[1] अस्मानाभिमुख्येन यन्तारौ भवतमित्यर्थः । मा

१. 'ह्नोऽभ्यायन्त्रसा' क. ख. 'ह्नोऽभ्यामस्मानाभि' ग, घ. पाठः २. 'ना' क. ख. पाठः ।

च केवलौ । किं तर्हि । मनीषिभिः मेधाविभिः सह । कैः । त्रयस्त्रिंशता देवैः । कुत एतत् । 'आनासत्या त्रिभिरेकादशैरिहे'ति दर्शनात् । अथवा हिम्येव वासस इत्येतत् उपमानम् । युवोर्हि यन्त्रमित्येतेन च सम्बध्यते । अयं च पादो भिन्नमेव वाक्यं पूर्वस्मादर्धर्चात् । युवोरिति षष्ठीनिर्देशात् ज्योतिरिति वाक्यशेषः । युवयोर्ज्योतिः । यन्त्रम् । यमु बन्धने । यमनं बन्धनम् । कस्य । सामर्थ्यात् तमसः । कथम् । हिम्येव वाससः । उष्यतेऽस्यामिति वासो रात्रिः । अहर्वचनेन वा वासश्शब्देन रात्रिर्लक्ष्यते । रात्र्यापि स्वसम्बन्धि तमो लक्ष्यते । यथोषाः शार्वरस्य तमसः, तद्वदित्यर्थः । चतुर्थोऽपि पादो भिन्नं वाक्यं, पूर्ववच्च सम्बन्धयितव्यः[1] ॥ १ ॥

### वेङ्कटमाधवीयम् ।

त्रिश्चित्तः । त्रिश्चिदस्माकमद्य भवतं प्राशौ । विभवति युवयोर्गमनमनेकेषु दानं च । युवयोर्हि युगलं रात्र्येवाह्नः सुश्लिष्टम् । तौ युवामस्मान् प्रति गन्तारौ भवतं देवैः ॥ १ ॥

**त्रयः॑प॒वयो॑मधु॒वाह॑ने॒रथे॒सोम॑स्यवे॒नाम॑नु॒विश्व॒इद्वि॑दुः ।**
**त्रयः॑स्क॒म्भासः॑स्कभि॒तास॑आ॒रभे॒त्रिर्नक्तं॑या॒थस्त्रिर्व॑श्विना॒दिवा॑ ॥ २ ॥**

**त्रयः॑ । प॒वयः॑ । म॒धु॒ऽवाह॑ने । रथे॑ । सोम॑स्य । वे॒नाम् । अनु॑ । विश्वे॑ । इत् । वि॒दुः॒ । त्रयः॑ । स्क॒म्भासः॑ । स्क॒भि॒तासः॑ । आ॒ऽरभे॑ । त्रिः । नक्त॑म् । या॒थः । त्रिः । ऊ॒म् इति॑ । अ॒श्वि॒ना॒ । दिवा॑ ॥ २ ॥**

### स्कन्दस्वामीयम् ।

त्रयः पवयः । पवयोऽत्र हिरण्मयानि मधुभाजनानि । 'हिरण्यया वां पवयः प्रुषायन्' इति मन्त्रान्तरे दर्शनात् । ते मधुपूर्णाः त्रयः पवयः युवयोः स्वभूते मधुवाहने रथे । आगच्छतोः श्रमात् पिपासितयोर्युवयोरास्ति रथे पेयं मध्वित्यर्थः । सोमस्य चोपरि वेनां कान्तिं युवयोरिच्छा (मु-। विश्वे इद् विदुः । इत् ए)वार्थे । सर्व एव यजमाना जानन्ति । आगताभ्यां युवाभ्यां सोमाभिलाषितां जानन्तः सर्व एव यजमानाः सोमं दास्यन्तीत्यर्थः । त्रयः

---

[1] 'व्याख्यातव्यम' ग. पाठः.

स्कम्भासः (स्तम्भाः) । स्कभितासः प्रतिबद्धाः । क । सामर्थ्याद् रथे सदसि वा । किमर्थम् । आरभे आरम्भणायावष्टम्भनाय । आगच्छतोरागतयोर्वा श्रान्तयोः रथे सदसि वा अवष्टम्भनस्तम्भा अपि विद्यन्त एवेत्यर्थः । एतज्ज्ञात्वा त्रिः बहुकृत्वः नक्तं रात्रौ याथः यातमस्मत्समीपम् । त्रिरु । उकार एवार्थे । बहुकृत्व एव हे अश्विनौ [1] दिवा ॥ २ ॥

## वेङ्कटमाधवीयम् ।

त्रयः पवयः । त्रीणि मधुपात्राणि मधुवाहने भवतो रथे । तं रथं सोमस्य कान्तां सूर्यामनु तस्याः स्वयंवरे सर्व एव देवास्तं रथं प्रत्यक्षेणाजानन् । तस्मिन् तिस्रः स्थूणाः अवष्टम्भनार्थं स्थापिताः । तौ युवां रात्रेरस्मांस्त्रिरागच्छत-मह्नश्च ॥ २ ॥

**समानेअहन्त्रिरवद्यगोहनात्रिरद्ययज्ञंमधुनामिमिक्षतम् । त्रिर्वाजवतीरिषोअश्विनायुवंदोषाअस्मभ्यमुषसश्चपिन्व-[तम् ॥ ३ ॥**

समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुना । मिमिक्षतम् । त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् । दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ॥ ३ ॥

## स्कन्दस्वामीयम् ।

अहन् । अहन् त्रिरित्यनयोः कारकक्रियाविशेषणयोः अवद्यगोहनेत्यन-यामन्त्रितस्थया क्रियया सम्बन्धः । पराङ्गवद्भावस्तु न भवति । त्रिशब्द-स्याव्यय(स्य) प्रतिषेधात् । समाने अहन्नित्यनयोस्त्रिःशब्देन व्यवधानात् । समाने अहन् एकस्मिन्नेवाहनि । त्रिः बहुकृत्वः । अवद्यगोहना ! गर्ह्यस्य तमसो गूहयितारौ !, स्वेन ज्योतिषापहन्तारावित्यर्थः । त्रिः बहुकृत्वः अद्य अस्मदीयं यज्ञं मधुनोदकेन मिमिक्षतं सिञ्चतम् । त्रिः बहुकृत्वः वाजवतीः बलवतीः इषः अन्नानि हे अश्विनौ ! युवं युवाम् अस्मभ्यं पिन्वतं सिञ्चतं क्षारयतम् । बलकराण्यन्नान्यस्मभ्यं दत्तमित्यर्थः । मा च केवलौ । किं तर्हि । युष्मत्प्रसा-देनैव दोषाः उषसश्च रात्रयश्चोषसश्चास्मभ्यं ददतु । उषश्शब्देनात्र साहच-

---

[1] 'त । हे स' ग. घ. पाठः.

र्थादहर्लक्ष्यते । सप्तम्येकवचनस्थाने उभयत्र प्रथमाबहुवचनम् । रात्रौ चाहनि च पिन्वतम् । सततं दत्तमित्यर्थः ॥ ३ ॥

### वेङ्कटमाधवीयम् ।

समाने अहन् । एकस्मिन्नहनि त्रिरागतौ हे भयानि विनाशयन्तौ ! त्रिरस्माकं यज्ञं मधुना सिञ्चतम् । तथा रात्रीरुषसश्च बलयुक्तान्यन्नानि युवामस्मभ्यं त्रि-(र्दो ? र्दु)ग्धम् ॥ ३ ॥

**त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।**
**त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम्**
**॥ ४ ॥**

**त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतम् । त्रिः । नान्द्यम् । वहतम् । अश्विना । युवम् । त्रिः । पृक्षः । अस्मे इति । अक्षराऽइव । पिन्वतम् ॥ ४ ॥**

### स्कन्दस्वामीयम् ।

त्रिर्वर्तिः । त्रिः बहुकृत्वः वर्तिर्वर्तन्या प्रसिद्धेन मार्गेण यातम् । क्व । त्रिरनुव्रते जने । अनुव्रतशब्दः आपन्नभक्तवचनः प्रसिद्धो लोके । बहुकृत्वो भक्ततामापन्ने मादृशे जने । नित्यभक्तस्य मादृशस्य मनुष्यस्य समीपं गच्छतमित्यर्थः । गत्वा च त्रिः सुप्राव्ये । सुष्ठु प्रवयति प्रतर्पयति यो देवताः, स सुप्रावी यष्टा तस्मै । त्रिः सुप्राव्ये बहुकृत्वो यष्ट्रे । त्रेधेव शिक्षतम् । त्रिधाशब्दस्त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वाद् बहुवचनस्यार्थे । इवशब्दोऽप्युपमार्थस्य सम्प्रत्यर्थे प्रयोग इति पदपूरणः । शिक्षतिर्दानकर्मा । बहुप्रकारं दत्तम् । किम् । सामर्थ्याद् धनम् । किञ्च त्रिर्नान्द्यम् 'टुनदि समृद्धौ' । बहुकृत्वः पुत्रादिसमृद्धिं वहतं प्रापयतम् । हे अश्विनौ ! युवां पुत्रादिसमृद्धिमपि दत्तमित्यर्थः । किञ्च, त्रिः पृक्षः । अन्ननामैतत् पठितम् । 'पक्वाः पृक्षो भरन्त वाम्' इत्यादिबहुवचनान्तसामानाधिकरण्यदर्शनाद् बहुवचनान्तं द्रष्टव्यम् । बहुकृत्वोऽन्नानि । अस्मे अस्मभ्यम् । अक्षरेव पिन्वतम् । अक्षर-

मित्युदकनाम। उदकानीव पिन्वतम्। यथा मेघोऽन्यो वा कश्चित् प्रभूतान्युदकानि दद्यादेवं प्रभूतान्यन्नानि बहुकृत्वोऽस्मभ्यं दत्तमित्यर्थः॥ ४॥

### वेङ्कटमाधवीयम्।

त्रिर्वर्त्तिः। त्रिर्मार्गं गच्छतम्। त्रिरनुकूलकर्मणि जन आगच्छतम्। त्रिः सुष्ठु परिरक्षणीये। तथा त्रेधा च दत्तम्। इवेति पूरणम्। त्रिरस्माकं हर्षजननं धनं वहतम्। त्रिरन्नमस्मासूदकानीव पर्जन्यः पिन्वतम्॥ ४॥

**त्रिर्नो॑ र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता॒ त्रिरु॒ताव॑तं॒ धियः॑।**
**त्रिः सौ॑भग॒त्वं त्रिरु॒त श्रवां॑सि न॒स्त्रिष्ठं वां॒ सूरे॑ दुहि॒ता रु॑हद्रथ॑म्॥ ५॥**

त्रिः। नः। र॒यिम्। व॒ह॒त॒म्। अ॒श्वि॒ना॒। यु॒वम्। त्रिः। दे॒वऽता॑ता। त्रिः। उ॒त। अ॒व॒त॒म्। धियः॑। त्रिः। सौ॒भ॒ग॒ऽत्वम्। त्रिः। उ॒त। श्रवां॑सि। नः॒। त्रि॒ऽस्थम्। वा॒म्। सूरे॑। दु॒हि॒ता। आ। रु॒ह॒त्। रथ॑म्॥ ५॥

### स्कन्दस्वामीयम्।

त्रिर्बहुकृत्वः नः अस्मभ्यं रयिं धनं वहतं प्रापयतं दत्तं हे अश्विनौ युवाम्। क्व। त्रिर्देवताता। यज्ञनामैतत्। आवृत्ते यागे पुनःपुनर्यजद्भ्योऽस्मभ्यमित्यर्थः। त्रिरुतावतं धियः। उतशब्दोऽप्यर्थे। धिय इत्यस्माच्च परो द्रष्टव्यः। धियोऽपि त्रिरवतम्। कर्माण्यपि प्रज्ञा वा अस्मदीया बहुकृत्वो रक्षतमित्यर्थः। किञ्च, त्रिः सौभगत्वं बहुकृत्वः सौभाग्यं सुधनतां वा। किम्। साकाङ्क्षत्वाद् योग्यत्वाच्च व्यवहितस्यापि वहतमित्यस्यानुषङ्गः। वहतं दत्तम्। त्रिरुत श्रवांसि। श्रव इत्यन्ननाम कीर्तिपर्यायो वा। अन्नान्यपि कीर्तिं वा बहुकृत्वो वहतम्। कस्मै। नः अस्मभ्यम्। किञ्च, त्रिष्ठं वामित्यादि। अत्रेतिहासमाचक्षते—"सूर्यस्य दुहितरं देवा वरयामासुः। त ऊचुः—आजिं धावाम, यो नो जेष्यति तस्येयं भविष्यतीति। तामश्विनौ जिग्यतुः। सा जिताश्विनो रथमारुरोहे"ति। तदेतत् त्रिष्ठं वामित्यादिनोच्यते। 'त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृतायातमर्वाक्' 'क्व त्रिचक्रा त्रिवृत' इत्यादिषु दर्शनादश्विनोः त्रिचक्रो रथः। स त्रिषु चक्रेषु स्थितत्वात् त्रिष्ठः।

लोकत्रयस्थत्वात् त्रिष्ठः । तं त्रिष्ठं वां युवयोः स्वभूता । सूरे दुहिता । सूरशब्दः सूर्यपर्यायः । षष्ठ्यर्थे सप्तमी । तत्प्रभवत्वाच्च उषसो दुहितृव्यपदेशः । सूर्यस्य दुहितोषाः । आरुहत् आरूढवती रथम् । तद्वक्ष्यति[1]— आ वां रथं दुहिता सूर्यस्येति ॥ ५ ॥

### वेङ्कटमाधवीयम्

त्रिर्नो रयिम् । त्रिरस्मभ्यं धनं वहतम् । त्रिर्यज्ञे दत्तम् । अपिच कर्माणि रक्षतम् । त्रिः सौभाग्यम् । त्रिरुतान्नानि । त्रिभिश्चक्रैर्यस्तिष्ठति, तं युवयो रथं सूर्यं स्वयंवरार्थं गतयोस्तस्य दुहितारुरोह ॥ ५ ॥

**त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।**
**ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥**

**त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊम् इति । दत्तम् । अत्ऽभ्यः । ओमानम् । शम्ऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतम् । शुभः । पती इति ॥ ६ ॥ ॥ ४ ॥**

### स्कन्दस्वामीयम् ।

त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः अश्विनौ! दिव्यानि भेषजानि व्याधिनिवृत्तिकराण्यौषधानि । त्रिः पार्थिवानि त्रिरुदत्तमद्भ्यः अन्तरिक्षात् । अप इति ह्यन्तरिक्षनाम । लोकत्रयेऽपि यानि भेषजानि तान्यस्मभ्यं बहुकृत्वो दत्तमित्यर्थः । किञ्च ओमानं सर्वोपस्करपालनसमर्थम् । शंयोः । चतुर्थ्यर्थे षष्ठी । शंयवे सुखकामाय ममकाय । मामकीनाय सूनवे पुत्राय । त्रिधातु । धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः । देवपितृमनुष्योपभोग्यैरन्नरसैस्त्रिभिरप्युपेतम्[2] । शर्म गृहनामैतत् । गृहम् । वहतं प्रापयतं दत्तम् ।

---

१. 'तत् कक्षीवान् वक्ष्य' ग घ. पाठः. २. 'श्र' ग. पाठः.

शुभस्पती उदकस्य स्वामिनौ । अथवा शंयोरिति सुखेच्छोपादानादिष्यमाणस्य याचितव्यत्वात् शं च दत्तमित्यर्थः । न गृहम् । ओमानमित्यपि अवतेस्तृप्तिकर्मणः । अवनं पालनं वा । त्रिधात्वित्यपि त्रयाणां धातूनां समूहः । अवनपालनयोरन्यतरद् देवपितृमनुष्योपभोग्यमन्नरसत्रयसमूहं सुखं च दत्तमित्यर्थः । अथवा त्रिधात्विति शर्मण एव विशेषणं, नार्थान्तरप्रतिनिर्देशः । धातुशब्देन तु शीतोष्णवर्षकालास्त्रय उच्यन्ते । त्रिषु कालेषु भवं त्रिधातु शर्म । कालत्रयेऽपि सुखं दत्तमित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

त्रिर्नो अश्विना । त्रिरस्मभ्यमश्विनौ ! दिवि भवानि भेषजानि दत्तम् । त्रिः पार्थिवानि । त्रिश्चान्तरिक्षाणि । शंयोर्बार्हस्पत्यस्य यज्जगतो रक्षकं सुखं तद् त्रिगुणमुदकपती ! सूनवे मदीयायावहतम् ॥ ६ ॥

इति प्रथमस्य तृतीये चतुर्थो वर्गः ॥

त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीम् अशायतम् ।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ।

त्रिः । नः । अश्विना । यजता । दिवेऽदिवे । परि । त्रिऽधातु । पृथिवीम् । अशायतम् । तिस्रः । नासत्या । रथ्या । पराऽवतः । आत्माऽइव । वातः । स्वसराणि । गच्छतम् ॥ ७ ॥

स्कन्दस्वामीयम् ।

नः अस्मान् हे अश्विनौ ! यजता । नेदमामन्त्रितम् । अनुदात्तत्वात् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेयम् । यौ यजता यष्टव्यौ यागार्हौ दिवेदिवे अहन्यहनि, तौ । त्रिधातु पृथिवीम् । त्रिधात्विति पृथिवीसामानाधिकरण्याद् व्यत्ययेन नपुंसकता । पृथिवीशब्देनापि समस्तभूमण्डलवचनेनैकदेशोऽत्र लक्ष्यते । त्रिभिरपि रसैरुपेतां निवासभूमिम् ।

१. 'त्र्यान्नरस' ॥ क. ख. पाठः

परि अशायतम् । अश्नोतेरिदं ण्यन्तस्य छान्दसं रूपम् । पर्यशायतं परिप्रापयतम् । दत्तमस्मभ्यमित्यर्थः । अथवा न इति षष्ठी पृथिवीविशेषणार्था । पृथिवी च वेदिरभिप्रेता । अशायतमित्यपि प्रकृत्यन्तरस्यैवाश्नोते रूपम् । अस्माकं स्वभूतां वेदिलक्षणां पृथिवीं परि अशायतम् अश्नुवाथाम् । सर्वतो व्याप्नुतमित्यर्थः । अथवा अशायतमिति शेते रूपम् । शेतिश्च स्थानार्थः । शुद्धोऽप्याङ्पूर्वार्थे द्रष्टव्यः । सर्वत आतिष्ठतम् । अवष्टभ्य (तिष्ठ)तमित्यर्थः । त्रिधात्विति धातुशब्दो यद्यन्तरसवचनस्ततः पूर्ववत् पृथिवीविशेषणम् । त्रिभी रसैरुपेतां वेदिलक्षणां पृथिवीमिति । अथ धातुशब्दः कालवचनः, ततः क्रियाविशेषणम् । त्रिषु पूर्वाह्णमध्यन्दिनापराह्णलक्षणेषु कालेषु भवं त्रिधात्वशायतम् । सर्वासु यागवेलासु अशायतमित्यर्थः । किञ्च, तिस्रोऽप्यस्मदीया ऐष्टिकपाशुकसौमिकलक्षणा वेदीः । हे नासत्या! नासत्यनामानौ ! । यद्यपि चाश्विनोरन्यतरस्येदं नामधेयं, तथापि साहचर्यादुभयोर्व्यपदेशः । रथ्या ! रथस्य वोढारौ ! यज्ञान् प्रति प्रापयितारौ ! रथे वा साधू! । परावतः । दूरनामैतत् । तात्स्थ्याच्चात्र ताच्छब्द्यम् । दूरस्था अपि । आत्मेव वातः । आत्मशब्देनात्रात्मसम्बन्धान्मन उच्यते । वात इत्यपि लुप्तेवशब्दमुपमानमेव द्वितीयम् । मन इव च वात इव च । यथा वायुमनसी शीघ्रं गच्छतः तद्वत् । स्वसराणि । अहर्नामैतत् । सप्तम्यर्थे चात्र प्रथमा । यजनीयेष्वहस्सु शीघ्रं गच्छतम् । अथवा आत्मेति वातस्य विशेषणं, न पृथगुपमानम् । वातो हि सर्वस्यात्मा । सर्वशरीराणां पाञ्चभौतिकत्वात् । यथा सर्वस्यात्मा वातः शीघ्रं गच्छति तद्वच्छीघ्रं गच्छतमिति । अनयोश्चार्धर्चयो. पूर्वेण निवासभूमिप्राप्तिराशास्यते परेण यागकाले वेदिगमनमित्यस्यां तावत् कल्पनायामपौनरुक्त्यमेव । यदा तु पूर्वेण वेदिव्याप्तिरुक्ता, तदा परेण वेदिगमनमुच्यते । गमनोत्तरकालं व्याप्तिः पूर्वेणेत्येवमपौनरुक्त्यम् । वाक्यभेदादर्धर्चयोस्तुल्यार्थत्वेऽप्यपौनरुक्त्यमेवेति ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

त्रिर्नो अश्विना । आश्विनौ ! यजनीयावह्नस्त्रिरस्मान् वेदिभूतां पृथिवीं बर्हिषा त्रिधातुना पर्यशाययतं परितस्तारितवन्तौ । त्रिधातु तिस्रो वेदीः । नासत्यौ ! रथ्यौ ! दूरादागच्छतं व्याप्त इव वायुरहानि. यथा वायुर्दिवसेषु सञ्चरति ॥ ७ ॥

---

१. 'वा' क. ख. पाठः.

त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥ ८ ॥

त्रिः । आश्विना । सिन्धुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा । हविः । कृतम् । तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकम् । रक्षेथे इति । द्युऽभिः । अक्तुऽभिः । हितम् ॥ ८ ॥

## स्कन्दस्वामीयम् ।

त्रिः बहुकृत्वः हे अश्विनौ ! सिन्धुभिः सप्तमातृभिः । स्यन्दनात् सिन्धवः सोमा उच्यन्ते । सप्त छन्दांसि मातृभूतानि अभिषवद्वारेण वा निर्मातृणि येषां ते सप्त मातरः सोमा एव । उभयत्र इत्थंभूतलक्षणे तृतीया । छन्दोभिरभिषुतैः सोमैः सम्बद्धाः । त्रय आहावाः । कूपादेः सन्निधौ प्रभूतोदकं गवादीनां निपानमाहाव इति प्रसिद्धं लोके । तत्स्थानीयाः त्रयः । किम् । सामर्थ्यात् कृतशब्दः परस्ताच्छ्रुतोऽनुषक्तव्यः । युष्मदर्थं कृताः । सामर्थ्यादस्माभिः । कतमे पुनस्ते । पूतभृदाधवनीयद्रोणकलशाः । बहुकृत्वोऽस्माभिर्युष्मदर्थं सर्वैः छन्दोभिरभिषुतानां सोमानां पूर्णा आहावस्थानीयाः पूतभृदाधवनीयद्रोणकलशास्त्रयोऽप्युपकल्पिता इत्यर्थः । न च केवलाः । किन्तर्हि । अन्यदपि पुरोडाशादि सवनविभागेन त्रेधा हविष्कृतम् । किञ्च, तिस्रः पृथिवीरुपरि प्रवा दिवः । पृथिवीशब्देनात्र साहचर्यात् सर्वे लोका उच्यन्ते । उपरीत्येतद् दिव इत्येतेन सम्बध्यते । प्रवेति प्रवतिर्गतिकर्मा । न चेदमामन्त्रितम् । अनुदात्तत्वात् । रक्षेथे इति मध्यमपुरुषसंयोगादयमप्यर्धर्चः प्रत्यक्षकृतः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता कल्प्या । यौ युवां त्रीनपि लोकानुपरि च द्युलोकस्य प्रवा गन्तारौ, तौ नाकं स्वर्गं स्वेन व्यापारेण रक्षेथे । न च केवलं, किन्तर्हि ।

१. 'साकाङ्क्षत्वात् कृ' ग. पाठः. २. 'इत्यपि म' क. ख. पाठः.
३ 'स्वव्या' घ पाठः.

द्युभिरक्तुभिः। द्यु इत्यहर्नाम। अक्तुरिति रात्रिनाम। उभयत्र च सहयोगलक्षणा तृतीया। अहोभिः रात्रिभिश्च सह। कीदृशम्। हितम्। उपकारकं सर्वप्रजानाम् ॥ ८ ॥

## वेङ्कटमाधवीयम्।

त्रिरश्विना। सप्तादित्यरश्मयो मातरो यासां नदीनां ताभिरश्विनौ! त्रिः कृतम्। एतद् विशदमाह — त्रय इति। कूपस्य समीपं प्रभूतोदकनिधानमाहावः। त्रय आहावाः कृताः। एतदेव स्पष्टमाह — त्रेधेति। द्रोणकलश आधवनीयः पूतभृदिति त्रय आहावाः। तेषु त्रेधा सोमः कृतः। एवं कृते तिस्रो वेदीरभिप्लवनेन दिव आगच्छतम्। युवामहोरात्रैर्निहितमादित्यं रक्षेथे ॥ ८ ॥

क्व१ त्रीचक्रात्रिवृतोरथस्यक्व१ त्रयोवंधुरोयेसनीळाः।
कदायोगोवाजिनोरासभस्ययेनयज्ञंनासत्योपयाथः ॥ ९ ॥

क्व। त्री। चक्रा। त्रिऽवृतः। रथस्य। क्व। त्रयः। वन्धुरः। ये। सऽनीळाः। कदा। योगः। वाजिनः। रासभस्य। येन। यज्ञम्। नासत्या। उपऽयाथः ॥ ९ ॥

## स्कन्दस्वामीयम्।

क्व त्री चक्रा त्रीणि चक्राणि। त्रिवृतः। त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्। तस्य त्रिवृतो युष्मदीयस्य रथस्यावयवभूतानि। क्व वा त्रयो वन्धुरः। सारथिस्थानं वन्धुर उच्यते। ये सनीळाः समानस्थानाः एकस्मिन्नेव प्रदेशे स्थिताः। मानुषस्य शकटस्येव (न) भिन्नप्रदेशवर्तिन इत्यर्थः। कदा योगः। रथे नियोजनम्। वाजिनः। वेगवतः। रासभस्य युष्मदीयस्याश्वस्य। कदा युष्मदीयोऽश्वो रथे नियोक्ष्यत इत्यर्थः। येनाश्वेन यज्ञं हे नासत्यौ! उपयाथः उपगच्छथः। किमसन्निहितानि वां गमनसाधनानि, येन नागच्छथः, इत्येवमागमनविलम्बनादुपालम्भोऽयम् ॥ ९ ॥

## वेङ्कटमाधवीयम्।

क्व त्री चक्रा। क्व त्रीणि चक्राणि। त्रिभिश्च तैर्वर्तमानस्य युवयो रथस्य क्व वा त्रयः फलकासंघाटाः। प्रउगाकारस्य कोणेषु त्रयः फलकासंघाटा भवन्ति। ये सनीळा एकस्मिन् रथे फलके संघटिताः कदा च यो(गे ? गो) रथे युवयोर्बलवतो रासभस्य, येन रासभेन नासत्यौ! यज्ञमुपगच्छथः ॥ ९ ॥

**आनासत्यागच्छतंहूयतेहविर्मध्वःपिबतंमधुपेभिरासभिः ।**
**युवोर्हिपूर्वंसवितोषसोरथमृतायचित्रंघृतवन्तमिष्यति**
**[॥ १० ॥**

आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । युवोः । हि । पूर्वम् । सविता । उषसः । रथम् । ऋताय । चित्रम् । घृतऽवन्तम् । इष्यति ॥ १० ॥

स्कन्दस्वामीयम् ।

हे नासत्यौ ! आगच्छतं युवाम् । किं कारणम् । यस्मात् सोमलक्षणं हविः हूयते । आगत्य च मध्वः मधुस्वादमिदं मधुस्वादस्य वा तस्यैकदेशं स्वांशलक्षणं पिबतम् । मधुपेभिरासभिः । व्यत्ययेनेदं बहुवचनम् । मधुपाभ्यामास्याभ्याम् । कस्मादागच्छावः । उच्यते । युवोर्हि । हिशब्दो यस्मादर्थे । यस्माद् युवयोः स्वभूतम् । पूर्वम् । क्रियाविशेषणमेतत् । अन्याभ्यो देवताभ्यः प्रथमम् । सविता । यजमाननामधेयमेतत् । शाकपूणिना पठितम् । सर्वस्य यज्ञस्य प्रसविताभ्यनुज्ञाता यजमानः । उषसश्च स्वभूतं रथम् । ऋताय । 'ऋ गतौ' । यज्ञं प्रति गमनाय । चित्रं विचित्रं पूजनीयं वा । घृतवन्तमुदकवन्तम् । इष्यति । इच्छतेरयं व्यत्ययेन श्यन् । इच्छति । यस्माद् यजमानो युष्मदीयमौष(धं? सं) च रथं पूर्वमागच्छन्तमिच्छतीत्यर्थः । अथवा सविता प्रकाशद्वारेण सर्वस्य प्रसविता सूर्य उच्यते । उषस इत्येतच्च ऋतायेत्येतेन सम्बध्यते । इष्यतीत्यपि भूतकाले लङ् व्यत्ययेन द्रष्टव्यः । यस्माद् युवयोः स्वभूतं रथं पूर्वमतीते काले सविता सर्वस्य प्रसविता सूर्यः स्वदुहितुरुषस ऋताय गमनाय इष्यति इष्टवान् प्रार्थितवान् । तदेतद् 'आवां रथं दुहिता सूर्यस्ये'त्यत्र वक्ष्यते । यस्मात् सूर्यप्रभृतिभिर्देवैरप्युषसो गमनाय प्रार्थितरथौ स्थः, तस्मान्महात्मकत्वादागच्छतमित्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

आ नासत्या । आगच्छतं नासत्यौ ! हूयते हविः । तं सोमं पिबतं सोमपैरास्यैः । बहुवचने न तात्पर्यमस्ति । यद्वा बहूनि भवन्ति देवशरीराणि । युवयोर्हि रथमुदकम् । तमुषसः पूर्वमपररात्र एव सविता दिवसकरणायेच्छति चित्रं प्रेरयति वेति ॥ १० ॥

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा
[ ॥ ११ ॥

आ । नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम् । मधुऽपेयम् । अश्विना । प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥ ११ ॥

स्कन्दस्वामीयम् ।

हे नासत्यौ ! त्रिभिरेकादशैरिह (देवेभिः) । एकादश परिमाणं येषां ते एकादशाः । त्रयस्त्रिंशत् । सहयोगलक्षणा चात्र तृतीया । इहेत्येतच्च मधुपेयमित्येतेन सम्बध्यते । त्रयस्त्रिंशता देवैः सह । इह यज्ञे यदेतन्मधुपेयं मधुस्वादश्च पानार्हश्च सोमलक्षणं हविः तत् प्रति आयातम् । आगत्य च सोमपानोत्तरकालं हे अश्विनौ ! प्रायुस्तारिष्टम् । प्रकर्षेणास्माकमायुर्वर्धयतम् । नीरपांसि मृक्षतम् । रपो रिप्रमिति पापनामनी भवतः । पापानि च निर्मृक्षतम् । 'मृजू शुद्धौ' । निश्शोधयतम् । सर्वाण्यपनयतमित्यर्थः । सेधतम् । सिधिरत्र सामर्थ्याद् वधार्थः । हतं च । किम् । द्वेषः द्वेष्टॄन् द्वेष्यं वा अस्माकम् । अथवा सेधतिर्गतिकर्मा । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । शुद्धोऽपि च सोपसर्गार्थो द्रष्टव्यः । यत्किञ्चिद् द्वेष्टृ द्वेष्यं वास्माकं, तत्सर्वमपगमयतमित्यर्थः । नित्यं च (सचाभुवा भवतं) यज्ञेष्वस्माभिः सह भवतम् । सचा सहेत्यर्थः । सहभुवौ एकस्थानवर्त्तिनौ नित्यमस्मदीयेषु यज्ञेष्वागच्छतमित्यर्थः ॥ ११ ॥

वेङ्कटमाधवीयम् ।

आ नासत्या । आयातं नासत्यौ ! त्रयस्त्रिंशद्देवैरिह । पातव्यं सोममायुश्च प्रवर्धयतम् । पापानि च विनाशयतम् । द्वेष्टॄंश्च निषेधतम् । भवतं च सहभूतावस्माभिः ॥ ११ ॥

आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ १२॥

आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् । वहतम् । सुऽवीरम् । शृण्वन्ता । वाम् । अवसे । जोहवीमि । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ १२ ॥

### स्कन्दस्वामियम् ।

न इति तादर्थ्ये चतुर्थी । अस्माकमर्थाय । हे अश्विनौ त्रिवृता रथेनात्मीयेन अर्वाञ्चमस्मदभिमुखं रयिं धनं वहतं प्रापयतम् । सुवीरं शोभनैर्वीरैरुपेतम् । शृण्वन्ता वां नित्यमस्मदीयमाह्वानं शृण्वन्तौ वां युवाम् । अवसे तर्पणाय पालनाय वा जोहवीमि पुनः पुनराह्वयामि । वृधे च वर्धनाय । नः अस्माकं भवतम् । वाजसातौ । सङ्ग्रामनामैतत । सङ्ग्रामे । नित्यं चास्मान् सङ्ग्रामेषु जयलक्षणया वृद्ध्या वर्धयतमित्यर्थः ॥ १२ ॥

### वेङ्कटमाधवीयम् ।

आ नो अश्विना । आवहतमश्विनौ ! त्रिवृता रथेनास्मभ्यमितोमुखं सुवीरं रयिम् । शृण्वन्तौ । वामहं रक्षणार्थं भृशमाह्वयामि । वृद्धयर्थं चास्माकं भवतं युद्धे ॥ १२ ॥

इति प्रथमस्य तृतीये पञ्चमो वर्गः ॥

---

**ह्वयाम्यग्निंप्रथमंस्वस्तयेह्वयामिमित्रावरुणाविहावसे ।**
**ह्वयामिरात्रींजगतोनिवेशनींह्वयामिदेवंसवितारमूतये ॥ १ ॥**

ह्वयामि । अग्निम् । प्रथमम् । स्वस्तये । ह्वयामि । मित्रावरुणौ । इह । अवसे । ह्वयामि । रात्रीम् । जगतः । निऽवेशनीम् । ह्वयामि । देवम् । सवितारम् । ऊतये ॥ १ ॥

### स्कन्दस्वामीयम् ।

ह्वयामीत्यग्नये पादो मैत्रावरुण उत्तरः ।
तृतीयो रात्रिसंस्तावः सूक्तं सावित्रमुच्यते ॥

ह्वयामीत्याद्यः पाद आग्नेयः । ततः परो द्वितीयो मैत्रावरुणः । तृतीयो रात्रेः संस्ताव इत्यर्थः । शिष्टमन्यत् सूक्तं सावित्रम् । ह्वयाम्यग्निम् । कीदृशम् प्रथमम् । क्रियाविशेषणं प्रथमशब्दः । अन्याभ्यो देवताभ्यः प्रथमम् अग्रे । स्वस्तये अविनाशायात्मनः । ह्वयामि मित्रावरुणाविहावसे पालनाय । ह्वयामि रात्रिं जगतः कृत्स्नस्य निवेशनीं स्वापकरीम् । ह्वयामि देवं सवितारमूतये पालनाय ॥ १ ॥

### वेङ्कटमाधवीयम् ।

ह्वयाम्यग्निम् । ह्वयाम्यग्निं मुख्यमविनाशाय । ह्वयामि मित्रावरुणाविह रक्षणाय । ह्वयामि रात्रीं जङ्गमस्य निवेशयित्रीम् । ह्वयामि देवं सवितारं रक्षणाय ॥१॥

**आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ।**
**हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ २ ॥**

**आ । कृष्णेन । रजसा । वर्तमानः । निऽवेशयन् । अमृतम् । मर्त्यम् । च । हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥ २ ॥**

### स्कन्दस्वामीयम् ।

रजोऽत्र तमो रात्रिर्वोच्यते । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । कृष्णेन रजसा तमसा रात्र्या वा व्याप्ते जगति । आवर्तमानः । वर्तत इति गतिकर्मा । 'लक्षणहेत्वोः क्रियायाः' (३-२-१२६) इत्येवं हेतौ शानच् । आगमेनात्मीयेन हेतुना । निवेशयन् । शुद्धोऽप्ययं निवेशिरभिपूर्वार्थो द्रष्टव्यः । स्वव्यापारेष्वभिनिवेशयन् । यत्नेन व्यापारयन्नित्यर्थः । किम् । अमृतम् । मरणवर्जितं देवादिम् । मर्त्यं च मनुष्यादिम् । उदिते हि सवितरि सर्वः स्वव्यापारे प्रवर्तते । अत एवमुच्यते आवर्तमानो निवेशयन्नमृतं मर्त्यं चेति । किं करोति । उच्यते । हिरण्ययेन सविता रथेन देवः आयाति भुवनानि कृताकृतप्रत्यवेक्षणार्थं पश्यन् । अथवा निवेशः स्वाप एवाभिप्रेतः । कृष्णेन रजसेत्येतच्च निवेशयन्नित्येतेन सम्बध्यते । सप्तम्यर्थे चात्र तृतीया । आवर्तमानो निवेशयन्निति हेतुहेतुमद्भावः । एवं योजना —

कृष्णायां रात्रौ निवेशयन् स्वापयन् अमृतं मर्त्यं च । आवर्तमानश्च । कदा । सामर्थ्यादहनि । हिरण्ययेन सविता रथेना देवो याति । कायाति । सामर्थ्याद् रात्रौ निवेशयन्नमृतं मर्त्यं च उदयगिरिं प्रत्यायाति उत्तरकुरुस्थानि भूतानि च पश्यन् । अहनि त्वावर्तमानः पृथिवीं प्रत्यायाति तत्रस्थानि भूतानि पश्यन्निति ॥ २ ॥

## वेङ्कटमाधवीयम् ।

आ कृष्णेन । कृष्णवर्णेन रजसा द्युलोकेन वर्तमानो निवेशयन् देवान् मर्त्यांश्च हिरण्मयेन सविता रथेन देव आयाति सर्वाणि भुवनानि पश्यन् ॥ २ ॥

**याति॑ दे॒वः प्र॒वता॒ यात्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् ।**
**आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः ॥ ३ ॥**

याति॑ । दे॒वः । प्र॒ऽवता॑ । याति॑ । उ॒त्ऽवता॑ । याति॑ । शु॒भ्राभ्या॑म् । य॒ज॒तः । हरि॑ऽभ्याम् । आ । दे॒वः । या॒ति॒ । स॒वि॒ता । प॒रा॒ऽवतः॑ । अप॑ । विश्वा॑ । दुः॒ऽइ॒ता । बाध॑मानः ॥ ३ ॥

## स्कन्दस्वामीयम् ।

प्रवता । 'उपसर्गाच्छन्दसि धात्वर्थे' (५-१-११८) इत्येवमयं वतिप्रत्ययः । शीघ्रयायिना । केन । सामर्थ्याद् रथेन । यात्युद्वता ऊर्ध्वगामिना । केन[1] । सामर्थ्याद् रथेन[2] । याति शुभ्राभ्यां शोभनाभ्याम् । यजतो यष्टव्यो यागार्हः । हरिभ्यामश्वाभ्याम् । यत्र यथा गन्तव्यं शीघ्रं[3] वोर्ध्वं वा रथेनाश्वैर्वा तत्र तथा गच्छतीत्यर्थः । किञ्च, आ देवो याति सविता परावतः दूरादुदयगिरेः । अप विश्वा दुरिता दुरितानि अत्र तमोलक्षणानि बाधमानः अपनयन् । अथवापुण्यान्येव दुरितानि तान्यपि सविता बाधते । रश्मिसंस्पर्शस्य शुचि[4]त्वकरत्वादहनि च पापनिवृत्त्यर्थं प्रायश्चित्तानुष्ठानात् ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

याति देवः । याति देवः प्रवणेन मार्गेण प्रतः । यात्यनन्तरमुन्नतः । याति शोभनाभ्यामश्वाभ्यां यष्टव्यः । आयाति देवः सविता दूरादपबाधमानो विश्वानि दुरितानि ॥ ३ ॥

---

१. 'न । र' क. ग. घ. पाठः. २. 'नेव । या' ग. घ. पाठः. ३. 'घ्रं र' क, ख., ४. 'चित्वाक' घ. पाठः.

अभीवृतंकृशनैर्विश्वरूपंहिरण्यशम्यंयजतोबृहन्तम् ।
आस्थाद्रथंसविताचित्रभानुःकृष्णारजांसितविषींदधानः [ ॥ ४ ॥

अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहन्तम् । आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥ ४ ॥

स्कन्दस्वामीयम् ।

(अभिवृतं) कृशनैः । हिरण्यनामैतत् । हिरण्यैः । सुवर्णखचितमित्यर्थः । विश्वरूपम् । विश्वमिति बहुनाम सर्वपर्यायो वा । बहुरूपं सर्वरूपम् (वा) । हिरण्यशम्यम् । वोढुरश्वस्यानडुहो वानपगमार्थं या निधीयते सा शम्येति प्रसिद्धा । सा हिरण्मयी यस्य तं हिरण्यशम्यम् । यजतो यागार्हम् । बृहन्तम् आस्थादातिष्ठति आस्थितवान् वा रथं सविता चित्रभानुर्विचित्रदीप्तिर्वा.... । कृष्णा कृष्णानि रजांसि तमांसि । तविषीम् । बलनामैतत् । तृतीयार्थे चात्र द्वितीया । स्वेन तेजसा बलेन । दधानः धारयन् निरुन्धन्नित्यर्थः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

अभीवृतम् । परिवृतं हिरण्यैर्नानारूपं हिरण्मयशम्यं यष्टव्यो महान्तं रथमास्थितः सविता चित्रदीप्तिः कृष्णानि तेजांसि बलं च दधानः ॥ ४ ॥

विजनाञ्छ्यावाःशितिपादोअख्यन्रथंहिरण्यप्रउगंवहन्तः ।
शश्वद्विशःसवितुर्दैव्यस्योपस्थेविश्वाभुवनानितस्थुः ॥ ५ ॥

वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः । शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥

स्कन्दस्वामीयम् ।

जनान् मनुष्यान् श्यावाः श्याववर्णाः शितिपादः श्वेतपादाः अश्वाः व्यख्यन् विविधं प्रकाशयन्ति सवितुः स्वभूतं रथं हिरण्यप्रउगम् । यत्र रथो

निबध्यते (उन्धि ?) (युगबन्धन)प्रदेशः प्रउगमित्युच्यते । स हिरण्मयो यस्य तं हिरण्यप्रउगं वहन्तः । किञ्च, शश्वत् । बहुनामैतत् । नित्यपर्यायो वा । बहु(नो ? शो) नित्यं वा । विशः मनुष्याः सवितुर्दैव्यस्य । देव एव दैव्यः । अथवा देवेषु दिवि वा भवो दैव्यः तस्य दैव्यस्य । उपस्थे उपस्थाने । विश्वा भुवनानि सर्वाणि च भूतानि । तस्थुः स्थिताः । बहवो मनुष्याः सर्वाणि भूतजातानि सवितारमुपतिष्ठन्त इत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

विजनान् । व्यख्यन् जनान् श्यावर्णाः श्वेतपादा हिरण्मयप्रउगं रथं वहन्तोऽश्वाः । सदा सवितुर्दिवि भवस्योपस्थे विशो व्याप्ता दिशास्तिष्ठन्ति, सर्वाणि च भुवनानि ॥ ५ ॥

तिस्रोद्यावःसवितुर्द्वाउपस्थाँएकायमस्यभुवनेविराषाट् ।
आणिंनरथ्यममृताधितस्थुरिहब्रवीतुयउतच्चिकेतत् ॥६॥

तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् । आणिम् । न । रथ्यम् । अमृता । अधि । तस्थुः । इह । ब्रवीतु । यः । ऊम् इति । तत् । चिकेतत् ॥ ६ ॥

स्कन्दस्वामीयम् ।

तिस्रो द्यावः । द्युशब्दोऽत्र दिवोऽवयवेषु देवस्थानेषु वर्तते । त्रीणि दिवोऽवयवभूतानि स्थानानि सवितुः । अथवा इत एव दर्शनाद् दिवां बहुत्वं प्रतिपत्तव्यम् । तिस्रो दिवः सवितुः स्वभूताः । तासां द्वौ द्वे । उपस्था समीपे सवितुः । एका यमस्य । भुवने लोके । विराषाडिति विपूर्वस्य राजतेर्दीप्त्यर्थस्येदं रूपम् । विविधं दीप्ताः । अथवा द्युसाहचर्यात् त्रयो लोका अत्र तिस्रो दिव उच्यन्ते । तासां द्वे समीपे द्यौरन्तरिक्षं च । एका तु पृथिवी यमस्य भुवने । अग्निरत्र यम उच्यते । 'यमो ह जातो यमो जनित्वमि'ति यथा । तस्य स्वभूते पार्थिवे लोके । विराषाट् विविधं दीप्ता । किञ्च, आणिं न रथ्यम् । चक्रस्याक्षान्निर्गमननिरोधार्थः कील आणिरुच्यते । रथे भवो रथ्यः । यथा रथ्य-

---

१. 'वा सा' क. ख. पाठः.

मार्णि सर्वाणि रथाङ्गान्याश्रितानि, एवं सवितारममृता। अमृतमित्युदकनाम। रश्म्याहृतान्युदकानि। अथवामृताशब्दो देववचनः। प्रथमाबहुवचनस्यायमाकारः। अमृता देवाः। अधितस्थुः अधिष्ठितवन्तः। आश्रिता इत्यर्थः। इह लोके सभायां वा ब्रवीतु। य उ तत्। उकारः पदपूरणः। यश्चिकेतत् ॥ ६ ॥

### वेङ्कटमाधवीयम्।

तिस्रो द्यावः। तिस्रो द्यावः सन्ति। तत्र द्वे सवितुरुपस्थे उत्सङ्गे भवतः। अथापरा यमस्याग्नेर्भुवनेऽपि राजते वैद्युतस्य। चक्रनिर्गमननिरोधार्थमाणि रथाक्षान्ते निहितं रथाङ्गानिवामृतानि कञ्चनाधितिष्ठन्ति। यस्तज्जानाति स इह तद् ब्रवीतु। अग्निना सवित्रा चोभयतःस्थिताभ्यामाणिभ्यामिव तिस्रो द्यावो ध्रियन्तेऽविनष्टा इति। यद्वा सर्वेषाममरणानि सवितरि तिष्ठन्तीति "तत् सविता वोऽमृतत्वमासुवदि"ति मन्त्रः ॥ ६ ॥

इति प्रथमस्य तृतीये षष्ठो वर्गः ॥

---

**वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः।**
**क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥ ७ ॥**

वि। सुऽपर्णः। अन्तरिक्षाणि। अख्यत्। गभीरऽवेपाः। असुरः। सुऽनीथः। क्व। इदानीम्। सूर्यः। कः। चिकेत। कतमाम्। द्याम्। रश्मिः। अस्य। आ। ततान ॥ ७ ॥

### स्कन्दस्वामीयम्।

सुपर्णः सुपतनः सुगमनः सविता। अथवा सुपर्ण इति रश्मिनाम। सामर्थ्याच्चान्तर्णीतमत्वर्थः। सुपर्णवान् रश्मिवान्। अन्तरिक्षाणि। अन्तरिक्षावयवाः अत्रान्तरिक्षशब्देनोच्यन्ते। बहून्येव वान्तरिक्षाणि। अन्तरिक्षसाहचर्याद् वा त्रयोऽपि लोका अन्तरिक्षाण्युच्यन्ते। तानि व्यख्यत् विविधं प्रकाशितवान्। गभीरवेपाः। गभीरं दुरवगाहम्। वेप इति कर्मनाम। गभीरकर्मा। असुरः प्रज्ञावान्। सुनीथः। प्रशस्यनामैतत्। प्रशस्यः। क्वेदानीम्। अनयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। इदानीमिति च

राज्यभिप्रायमेतत् । यो दिवोऽन्तरिक्षाणि व्यख्यत्, केदानीं रात्रौ सूर्यः सर्ता गन्ता सविता । कस्तच्चिकेत जानाति । यो जानाति स आचष्टामित्यर्थः । कतमां द्यां दिवोऽवयवं द्युलोकमेव वा । लोकमात्रवचनो द्युशब्दः । कतमं लोकम् । रश्मिरस्य स्वभूतः । आततान तनोति । तनोतिरत्र सामर्थ्यात् प्रकाशनार्थः । प्रकाशयति । अथवा द्यामिति द्वितीयानिर्देशात् कर्मप्रवचनीय-प्रतिशब्दाध्याहारः । कतमां द्यां प्रति रश्मिरस्याततान आत्मानं विस्तारयति ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

वि सुपर्णः । व्यख्यच्छोभनपतनोऽन्तरिक्षाणि त्रीणि गम्भीरवेगः प्राज्ञः प्रशस्यः । स इदानीं सविता सुवीर्यः क भवति । रात्रौ कश्चैनं जानाति । कतमां च द्यामस्य रश्मिराततानेति रात्रौ पृच्छति ॥ ७ ॥

**अष्टौव्य॑ख्यत्क॒कुभः॑पृथि॒व्यास्त्रीधन्व॒योज॑नास॒प्तसिन्धू॑न् ।**

**हि॒र॒ण्या॒क्षःस॑वि॒तादे॒वआगा॒द्दध॒द्रत्ना॑दा॒शुषे॒वार्या॑णि ॥ ८ ॥**

अ॒ष्टौ । वि । अ॒ख्य॒त् । क॒कुभः॑ । पृ॒थि॒व्याः । त्री । धन्व॑ । योज॑ना । स॒प्त । सिन्धू॑न् । हि॒र॒ण्य॒ऽअ॒क्षः । स॒वि॒ता । दे॒वः । आ । अ॒गा॒त् । दध॑त् । रत्ना॑ । दा॒शुषे॑ । वार्या॑णि ॥ ८ ॥

## स्कन्दस्वामीयम् ।

अष्टौ व्यख्यत् । ककुभः दिङ्नामैतत् । दिशः पृथिव्याः सम्बन्धिनीः । न च केवलाः । किन्तर्हि । त्री धन्व । त्रीणि च धन्वानि । धन्वेत्यन्तरिक्षनाम । अत एव च दर्शनादन्तरिक्षाणां त्रित्वं प्रतिपत्तव्यम् । तदवयवेषु वाद्यमध्यान्तेषु धन्वशब्दो वर्तते । साहचर्याद् वा त्रयो लोकास्त्रीणि धन्वान्युच्यन्ते । योजना । युज्यन्त एभिर्मनुष्यास्तत्फलैरिति योजनानि कर्माणि । तानि च सप्त सिन्धून् । नदीनामैतत् । शोणाद्यान् महतः प्रधानभूतान् नदान् । अथवा सप्तसङ्ख्यायोगात् सिन्धवोऽत्र रश्मय उच्यन्ते । तृतीयार्थे द्वितीया । सप्तभी रश्मिभिर्व्यख्यदित्यर्थः । परोऽर्धर्चो भिन्नमेव वाक्यम् । यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या । यो व्यख्यत् ककुभः स हिरण्याक्षः । हिरणमये एव हिरणमयसदृशे वा अक्षिणी यस्य स हिरण्याक्षः ।

सविता देव आगात् आगत उदित इत्यर्थः । दधत् ददत् । रत्ना धनानि । दाशुषे यजमानाय वार्याणि वरणीयानि उत्कृष्टानि ॥ ८ ॥

वेङ्कटमाधवीयम् ।

अष्टौ व्यख्यत् । अष्टौ दिशो व्यख्यदन्तरिक्षसम्बन्धिनीस्त्रीणि[1] चान्तरिक्षाणि कार्येष्ववकाशप्रदानेन योजकानि सप्त च सिन्धून् हिरण्याक्षः सविता देव आगात् प्रयच्छत् रत्नानि वरणीयानि यजमानाय ॥ ८ ॥

**हिरण्यपाणिःसविताविचर्षणिरुभेद्यावापृथिवीअन्तरीयते ।**

**अपामीवांबाधतेवेतिसूर्यमभिकृष्णेनरजसाद्यामृणोति ॥९॥**

हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति । अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥ ९ ॥

स्कन्दस्वामीयम् ।

हिरण्यपाणिः[2] । हिरण्मयौ पाणी यस्य स हिरण्यपाणिः । अत्र च शाङ्खायना इतिहासं[3]ब्राह्मणमधीयते—"अथ यत्र ह तद्देवा यज्ञमतन्वत[4] । तत् सवित्रे प्राशित्रं[5] परिजह्रुः । तस्य पाणी प्रचिच्छेद । तस्मै[6] हिरण्मयौ प्रतिदधुः । तस्माद्धिरण्यपाणिरिति स्तुत" इति । स हिरण्यपाणिः सविता विचर्षणिः कृताकृतस्य विद्रष्टा । उभे द्यावापृथिवी । अन्तः । अधिकरणश्रुतेर्योग्यक्रियाध्याहारः । मध्येऽवस्थितः । ईयते गच्छति । मध्ये स्थितः उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः । किञ्च, अपामीवां बाधते । अमीवा हिंसिता शत्रुर्यजमानस्य । तमो वा प्रकाशस्य हिंसितृत्वात् । तम् अपबाधते । वेतिर्गतिकर्मा । अयं गच्छति च । सूर्यम् । प्रथमार्थे द्वितीया । सूर्यः सर्ता । कं प्रति सामर्थ्यादस्तपर्वतम् । अथवा सर्तव्यत्वात् सूर्यप्रतिसम्बन्धाद् वा सूर्योऽस्तपर्वत इहोच्यते । तं प्रति अस्तं गच्छतीत्यर्थः । ततश्चोत्तरकालं कृष्णेन रजसा तमसा द्यामृणोति । ऋणोतिर्गतिकर्मा । सामर्थ्याच्चान्तर्णीतण्यर्थः । अभिगमयति व्यापयतीत्यर्थः ॥ ९ ॥

---

१. 'स्त्रीति त्रीणि' ग. पाठः. २. 'णिः । अत्र' क. ख. पाठः. ३. 'समाचक्षते — अथ' ग. घ पाठः. ४. 'अयनम' घ. पाठः. ५. 'त्रे प्राशितुं प' ग. पाठः. ६. 'स्माद्धि' ग. घ. पाठः.

वेङ्कटमाधवीयम् ।

हिरण्यपाणिः । हिरण्मयपाणिः सविता जगतोऽपि द्रष्टा द्यावापृथिव्योरुभयोर्मध्येन गच्छति । अपबाधते च रक्षः । सूर्यं च प्राप्नोति । कृष्णेन तेजसा सूर्येव द्युलोकं विध्यति ॥ ९ ॥

**हिरण्यहस्तोअसुरःसुनीथःसुमृळीकःस्ववाँयात्वर्वाङ् ।**

**अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषंगृणानः ॥ १० ॥**

हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥ १० ॥

स्कन्दस्वामीयम् ।

हिरण्यहस्तो असुरः प्रज्ञावान् सुनीथः प्रशस्यः सुमृळीकः सुसुखः स्ववान् धनवान् यात्वर्वाङ् अस्मदभिमुखम् । अपसेधन् । सेधतिरत्र सामर्थ्याद् वधार्थः । गत्यर्थो वान्तर्णीतिण्यर्थः । अपघ्नन् अपगमयन् वा रक्षसः राक्षसान् । कीदृशान् । यातुधानान् राक्षसान् । रक्षश्शब्देनैवोक्तत्वाद् विशेषणार्थः । क्रियाशब्दोऽयं वा[1] । यातु हिंसा, तस्यां निधातव्या स्थापयितव्या यातुधानाः तान् यातुधानान् । हिंसार्हानित्यर्थः । आगत्य च अस्थात् लोडर्थेऽयं लुङ् । तिष्ठतु अस्मदीयायां वेद्यां प्रतिदोषम् । दोषेति रात्रिनाम । अत्र साहचर्यादहनि वर्तते । प्रत्यहम् । गृणानः । व्यत्ययेनायं कर्मणि कर्तृशब्दः । गीयमानः स्तूयमानोऽस्माभिः ॥ १० ॥

वेङ्कटमाधवीयम् ।

हिरण्यहस्तः । हिरण्मयहस्तो बली प्रशस्यः सुखयिता धनवान् सविताभिमुखं इहायातु । रक्षसो हिंसानिधानान् निषेध(दनुद ? न्न)स्थाद्देवः प्रतिरात्रमस्माभिः स्तूयमानः ॥ १० ॥

**येतेपन्थाःसवितःपूर्व्यासोरेणवःसुकृताअन्तरिक्षे ।**

**तेभिर्नोअद्यपथिभिःसुगेभीरक्षाचनोअधिचब्रूहिदेव ॥ ११ ॥**

---

१. 'वा' तनयं पा' क. ख. पाठः.

ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः । अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ११ ॥

ये ते तव पन्थाः पन्थानः हे सवितः! पूर्व्यासः पूर्वे चिरन्तनाः अरेणवः पांसुवर्जिताः सुकृताः शोभनाः कृताः । केन । सामर्थ्यात् त्वयैव विधात्रा । क । अन्तरिक्षे । तेभिः । न इति तादर्थ्ये चतुर्थी । तृतीयानिर्देशाच्च योग्याक्रियाध्याहारः । तैरस्मदर्थमागत्य । अद्य । कैः । पथिभिः । कीदृशैः । सुगेभिः सुगमनैः । रक्ष च । नः अस्मान् । अधि च ब्रूहि । अधिवचनमाज्ञापनम् । आज्ञापय च यदाज्ञापयितव्यं हे देव! ॥ ११ ॥

वेङ्कटमाधवीयम् ।

ये ते पन्थाः । ये तव मार्गाश्चिरन्तना रेणुवर्जिताः[1] सुष्ठु कृता अन्तरिक्षे, तैरस्मान् पथिभिः सुगमैरद्य रक्ष । अपि च अस्मानधिब्रूहि । पुनर्नं इति पूरणम् ॥ ११ ॥

इति प्रथमस्य तृतीये सप्तमो वर्गः ॥

इति प्रथमे मण्डले सप्तमोऽनुवाकः ॥

---

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म् ।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥ १ ॥

प्र । वः । यह्वम् । पुरूणाम् । विशाम् । देवऽयतीनाम् । अग्निम् । सुऽउक्तेभिः । वचःऽभिः । ईमहे । यम् । सीम् । इत् । अन्ये । ईळते ॥ १ ॥

स्कन्दस्वामीयम् ।

प्रवः कण्व उत्तरः[2] । प्रवो यह्वमित्येतं कण्वो नाम महर्षिर्हिरण्यस्तूपादुत्तरोऽपश्यत्[3] । घौरः घोरपुत्रश्च स ज्ञेयः । प्रवो यह्वमित्याग्नेयं[4] चैतत् सूक्तम् । प्रेत्युपसर्गः ईमह इत्याख्यातेन सम्बन्धयितव्यः । व इति द्वितीयैकवचनस्य

---

१. 'कमधि' क. पाठः, २. 'रम् ।', ३. 'पोऽप' क. ख. पाठः, ४. थम् आग्नेयं चै.

स्थाने बहुवचनम् । त्वाम् । यह्वम् । महन्नामैतत् । महान्तम् । पुरूणां विशां देवयतीनाम् । पुर्विति बहुनाम । सर्वत्र च निर्धारणे षष्ठी । बह्वीनां मनुष्यजातीनां मध्ये । वयमग्निं सूक्तेभिः स्तुतिलक्षणैर्वचोभिः प्रेमहे प्रकर्षेण याचामहे । यं सीमित् । सीमिति परिग्रहार्थीयो वा पदपूरणो वा । इच्छब्दस्तु पदपूरण एव । यं सर्वेऽन्येऽपीळते । ईळिरत्र याच्ञार्थः । याचन्ते । अथवा सूक्तानां वचसां स्तुतिकरणत्वादीमहे ईळत इत्येतावपि स्तुत्यर्थौ । बह्वीनां मनुष्यजातीनां मध्ये वयं स्तुमः । यमन्येऽपि स्तुवन्तीत्यर्थः ॥ १ ॥

वेङ्कटमाधवीयम् ।

प्रवो यह्वम् । कण्वो घौरः । प्रयाचामहे बह्वीनां वो देवानिच्छन्तीनां विशां महान्तमग्निं वयं शोभनवचनैर्वचोभिः, यमग्निं सर्वेऽप्यन्येऽभिलषितं याचन्ते ॥ १ ॥

**जनासोअग्निंदधिरेसहोवृधंहविष्मन्तोविधेमते ।**
**सत्वंनोअद्यसुमनाइहाविताभवावाजेषुसन्त्य ॥ २ ॥**

जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम । ते । सः । त्वम् । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ॥ २ ॥

स्कन्दस्वामीयम् ।

स त्वं न इति तच्छ्रुतेर्यच्छब्दोऽध्याहार्यः । यं जनासः मनुष्याः अग्निं दधिरे । परिचर्यया धारयन्तीत्यर्थः । सहोवृधं बलस्य वर्धयितारं हविष्मन्तः विधेम वयमपि परिचरामः । ते । द्वितीयार्थे षष्ठ्येषा । त्वाम् । स त्वं नो अद्य सुमनाः सुचित्तोऽनुग्रहपरः इहाविता पालयिता भव । वाजेषु सङ्ग्रामेषु । हे सन्त्य ! । 'षणु दान' इत्यस्यैतद् रूपम् । दातः ॥ २ ॥

वेङ्कटमाधवीयम् ।

जनासो अग्निम् । अग्ने ! यं त्वामन्येऽपि जना अधारयन् बलस्य वर्धयितारं तं वयमपि हविष्मन्तः परिचरामः । स त्वं नो अद्य शोभनमना इह रक्षको भव, युद्धेषु भजनीयः ॥ २ ॥

---

१. न्तः वयमपि हविष्मन्तः वि' क. ख. पाठः.

प्रत्वांदूतंवृ॑णीमहे॒होता॑रंवि॒श्ववे॑दसम्।
म॒हस्ते॑स॒तोविच॑रन्त्य॒र्चयो॑दि॒विस्पृ॑शन्ति॒भा॒नवः॑॥ ३॥

प्र। त्वा॒। दू॒तम्। वृ॒णी॒म॒हे॒। होता॑रम्। वि॒श्वऽवे॑दसम्।
म॒हः। ते॒। स॒तः। वि। च॒र॒न्ति॒। अ॒र्चयः॑। दि॒वि। स्पृ॒श॒न्ति॒।
भा॒नवः॑॥ ३॥

## स्कन्दस्वामीयम्।

प्रत्वा दूतं प्रवृणीमहे होतारं च विश्ववेदसं सर्वधनं सर्वज्ञं वा। महस्ते सतः। अयमर्धर्चो भिन्नं वाक्यं पूर्वस्मादर्धर्चात्। यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या। यस्य ते तव महः महतः सुदीप्तस्य सतः सर्वतो विचरन्त्यर्चयः ज्वालाः। दिवि स्पृशन्ति भानवः। दिवीति द्वितीयार्थे सप्तमी। भानवो दीप्तयः दिवं स्पृशन्ति॥ ३॥

## वेङ्कटमाधवीयम्।

प्रत्वा दूतम्। प्रवृणीमहे त्वां दूतं होतारं सर्वधनं महतो भवतस्तव विचरन्त्यर्चयो दिवि च स्पृशन्ति भासमानाः॥ ३॥

दे॒वास॑स्त्वा॒वरु॑णोमि॒त्रोअ॑र्य॒मासन्दू॒तंप्र॒त्नमि॑न्धते।
विश्वं॒सोअ॑ग्नेजयति॒त्वया॒धनं॒यस्ते॑द॒दाश॒मर्त्यः॑॥ ४॥

दे॒वासः॑। त्वा॒। वरु॑णः। मि॒त्रः। अ॒र्य॒मा। सम्। दू॒तम्।
प्र॒त्नम्। इ॒न्ध॒ते॒। विश्व॑म्। सः। अ॒ग्ने॒। ज॒य॒ति॒। त्वया॑। धन॑म्।
यः। ते॒। द॒दाश॑। मर्त्यः॑॥ ४॥

## स्कन्दस्वामीयम्।

देवासस्त्वा वरुणो मित्रो अर्यमेत्येते दूतं प्रत्नं पुराणं समिन्धते तेजसा दीपितवन्तः। देवा अपि त्वां परिचारितवन्तः, न केवला मनुष्या इत्यर्थः।

किञ्च, विश्वम् । बहुनामैतत् । बहु । सः हे अग्ने ! जयति, स्ववशे करोति । लभत इत्यर्थः । त्वया । तृतीयानिर्देशादत्र योग्यक्रियाध्याहारः । त्वया अनुगृह्यमाणः । किं जयति । धनम् । किं करोति । यस्ते ददाश हविर्ददाति मर्त्यो मनुष्यः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

देवासस्त्वा । वरुणादयो देवास्त्वां दूतं पुराणं समिन्धते । तथा यस्तुभ्यं हविः प्रयच्छति मनुष्यः, स त्वया विश्वं धनं जयति ॥ ४ ॥

मन्द्रोहोतागृहपतिरग्नेदूतोविशामसि ।

त्वेविश्वासंगतानिव्रताध्रुवायानिदेवाअकृण्वत ॥ ५ ॥

मन्द्रः होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि । त्वे इति । विश्वा । समऽगतानि । व्रता । ध्रुवा । यानि देवाः । अकृण्वत ॥ ५ ॥

स्कन्दस्वामीयम् ।

मन्द्रः । मदतिः स्तुत्यर्थः । स्तोता । हर्ष(यस्मा?यिता वा) । होता गृहपतिश्च हे अग्ने ! दूतश्च विशां मनुष्याणाम् असि भवसि । किञ्च, त्वे तव । विश्वा सर्वाणि । सङ्गतानि स्तोतृभिः यष्टृभिश्च सह सख्यानि । व्रता कर्माणि च । ध्रुवा ध्रुवाणि । कतमानि । उच्यते । यानि देवाः । अकृण्वत कृतवन्तः । हविर्वहनादीन्यग्नेः कर्माणि देवैः कृतानि ॥ ५ ॥

वेङ्कटमाधवीयम् ।

मन्द्रो होता । मादयिता होता गृहपतिरग्ने! दूतो मनुष्याणां भवसि । त्वयि विश्वानि कर्माणि ध्रुवाणि सङ्गतानि, यानि देवाः पृथक् पृथक् कुर्वन्ति वर्षणनियमनोत्क्षेपणादीनि । यानि प्रत्येकं देवाः कुण्वन्ति, तानि सर्वाणि त्वयि सङ्गतानीति ॥ ५ ॥

इति प्रथमस्य तृतीयेऽष्टमो वर्गः ॥

---

त्वेइदग्नेसुभगेयविष्ठ्यविश्वमाहूयतेहविः ।

सत्वंनोअद्यसुमनाउतापरंयक्षिदेवान्त्सुवीर्या ॥ ६ ॥

त्वे इति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः । सः । त्वम् । नः । अद्य । सुऽमनाः । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ॥ ६ ॥

## स्कन्दस्वामीयम् ।

त्वे इत् । स त्वं न इति तच्छब्दात् यच्छब्दोऽध्याहार्यः । यस्मिंस्त्वयि । इदिति पदपूरणः । हे अग्ने! सुभगे सुधने । यविष्ठ्य! युवतम! विश्वं बहु सर्वं वा आहूयते हविः । स त्वं नो अद्य सुमनाः सुचित्तोऽनुग्रहपरः । उताप-रम् । उतेत्यप्यर्थे । अपरमित्यस्माच्च परो द्रष्टव्यः । अपरमिति च सप्तम्यर्थे द्वितीया । अपरस्मिन्नपि काले, अद्य चागामिनि च काल इत्यर्थः । यक्षि यज । देवान् सुवीर्या । तृतीयैकवचनस्यायमाकारः । शोभनेनात्मीयेन वी-र्येण ॥ ६ ॥

## वेङ्कटमाधवीयम् ।

त्वे इदग्ने । त्वय्येवाग्ने! शोभनधने युवतम सर्वदेवार्थं हविराहूयते, स त्वं नो अद्य सुमनाः, अपिचाप(रा ? रं)श्वश्च यज देवान् शोभनेन वीर्येण ॥ ६ ॥

**तं घेमित्था नमस्विन उप स्वराजमासते ।**
**होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ॥ ७ ॥**

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते । होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः । अति । स्रिधः ॥ ७ ॥

## स्कन्दस्वामीयम् ।

तमग्निम् । घेमिति पदपूरणे । इत्था । सत्यनामैतत् । सत्यम् । नमस्विनः स्तुतिमन्तः स्वराजं स्वदीप्तम् उपासते स्तुतिभिः परिचरन्ति । न च न स्तुवन्त्येव केवलम् । किं तर्हि । होत्राभिः । यज्ञनामैतद् आहुतिल-क्षणेषु यागेषु वर्तते । आहुतिभिश्चाग्निं मनुषः मनुष्याः समिन्धते सन्दीपयन्ति

तितिर्वांसः अग्निप्रसादादेव निस्तीर्णवन्तः। अथवा तिरतीति वधकर्मसु पाठात् तिरतिरत्र वधार्थः। हतवन्तः। अति सुष्ठु। स्रिधः। स्रेधतिः क्षयार्थः शोषणार्थो वा क्षपयितॄन् शोषयितॄन् वा। बलवतः शत्रूनित्यर्थः॥ ७॥

## वेङ्कटमाधवीयम्।

तं घेम्। तं हैनमित्थं हविष्मन्त उपासते स्वराजं वाग्भिरग्निं मनुष्याः प्रज्वलयन्ति अतितरन्तः शत्रून्॥ ७॥

**घ्नन्तो॑ वृ॒त्रम॑तर॒न्रोद॑सी अ॒प उ॒रु क्षया॑य चक्रिरे।**

**भुव॒त्कण्वे॒ वृषा॑ द्यु॒म्न्याहु॑तः॒ क्रन्द॒दश्वो॒ गवि॑ष्टिषु॥ ८॥**

घ्नन्तः॑। वृ॒त्रम्। अ॒त॒र॒न्। रोद॑सी॒ इति॑। अ॒पः। उ॒रु। क्षया॑य। च॒क्रि॒रे। भुव॑त्। कण्वे॑। वृषा॑। द्यु॒म्नी। आऽहु॑तः। क्रन्द॑त्। अश्वः॑। गोऽइ॑ष्टिषु॥ ८॥

## स्कन्दस्वामीयम्।

घ्नन्तः, न पलायमानाः, वृत्रमतरंश्च निस्तीर्णवन्तः। के। सामर्थ्यादग्नेः स्तोतारो यष्टारश्च। रोदसी अपः। अप इत्येतदन्तरिक्षनाम द्वितीयाबहुवचनान्तम्। बहुवचनान्तमेव ह्याप इत्यन्तरिक्षनामसु पठितम्। द्यावापृथिव्यौ चान्तरिक्षं च। कीदृशम्। उरु विस्तीर्णम्। क्षयाय निवासायात्मनः चक्रिरे कृतवन्तः। अग्निप्रसादात् त्रिष्वपि लोकेषु न्यवसन्नित्यर्थः। यत एवमतो ब्रवीमि भुवत् भवतु। कण्वे। षष्ठ्यर्थे सप्तम्येषा। ममापि कण्वस्य। वृषा कामानां वर्षिता, दातेत्यर्थः। द्युम्नी। द्युम्नं द्योततेर्यशो वान्नं वा धननाम वा तद्वान्। यशस्वी अन्नवान् धनवान् वा इत्यर्थः। आहुतः। आङ् मर्यादावचनः। मर्यादया हुतः। किं कुर्वन्। उच्यते। क्रन्दत्। 'कदि क्रदि क्लदि आह्वाने'। शत्रन्तं चेदं द्रष्टव्यम्। क्रन्दन् आह्वयन् देवान्। अश्वः। लुप्तोपममेतद् द्रष्टव्यम्। अश्व इव महता शब्देनेत्यर्थः। अथवा अश्वशब्दोऽत्र क्रियाशब्दे। अष्टा व्याप्ता। क। उच्यते। गविष्टिषु। गावः सोमाः। ते यत्रेष्यन्ते देवताभिः गावो वा याभिरिष्यन्ते यजमानैः, ता गविष्टयः।

तासु यज्ञेष्वित्यर्थः । अथवा क्रन्ददित्याख्यातम् । क्रन्दत् क्रन्दतु आह्वयतु च देवता यज्ञेष्वित्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

घ्नन्तो वृत्रम् । घ्नन्त उपद्रवमतरन् द्यावापृथिव्यावन्तरिक्षं च विस्तीर्णं निवासाय स्थानं कुर्वन्ति स्तोतारोऽग्ने । सोऽग्निरधुना कण्वे मयि वर्षिता भव(न्त्व ? त्व)न्नवानाहुतो गवामन्वेषणेषु क्रन्ददश्वो यथा शब्दायमानोऽश्वो गाः साधयति तद्वत् साधयिता ॥ ८ ॥

**संसीदस्वमहाँअसिशोचस्वदेववीतमः ।**

**विधूममग्नेअरुषंमियेध्यसृजप्रशस्तदर्शतम् ॥ ९ ॥**

सम् । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः । वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त । दर्शतम् ॥ ९ ॥

स्कन्दस्वामीयम् ।

संसीदस्वास्मद्वेद्याम् । किं कारणम् । यस्मात् महानसि । संसद्य च शोचस्व दीप्यस्व । देववीतमः । वेतिर्गत्यर्थः कान्त्यर्थो वा । अतिशयेन देवान् प्रति गन्ता कामयिता वा देवानां रोचमानैः[1] । अर्धदग्धानां, हविषां धूमम् । हे अग्ने ! अरुषम् । रुशते रोचतेर्वाङ्पूर्वस्य अरुषशब्दः । स्वदीप्त्या दीप्तम् । बहळमित्यर्थः । अथवा रुषतेर्गतिकर्मणः । अरुषो गन्ता । दिवं प्रति गन्तारं, दिवःस्पृशमित्यर्थः । हे मियेध्य ! मेध्य ! यज्ञार्ह ! विसृज विमुञ्च । हे प्रशस्त ! दर्शतं दर्शनीयम् ॥ ९ ॥

वेङ्कटमाधवीयम् ।

संसीदस्व । संसीदस्व, महानसि, ज्वल अतिशयेन देवान् प्रति गन्ता । विसृज धूममग्ने ! आरोचमानं यज्ञिय ! प्रशस्त ! दर्शनीयम् ॥ ९ ॥

**यंत्वादेवासोमनवेदधुरिहयजिष्ठंहव्यवाहन ।**

**यंकण्वोमेध्यातिथिर्धनस्पृतंयंवृषायमुपस्तुतः ॥ १० ॥**

---

१. 'शो' ग. घ. पाठः. २. 'नं' घ. पाठः.

यम्। त्वा। देवासः। मनवे। दधुः। इह। यजिष्ठम्। हव्यऽवाहन। यम्। कण्वः। मेध्यऽअतिथिः। धनऽस्पृतम्। यम्। वृषा। यम्। उपऽस्तुतः॥ १०॥

## स्कन्दस्वामीयम्।

अत्रेतिहासमाचक्षते—"देवाः सत्रमासत। ते तत्राग्निमैन्धत। ते (तेज)स्वन्तोऽग्निं मनवे प्रादुः। तं मनुरैन्धत ऋषय ऋषिपुत्राश्च श्रुतऋषयः प्रावचनाश्चेति। तत्र यदिन्धनं तद् दर्शपूर्णमासयोराहवननिगमे दृश्यते। देवेद्धो मन्विद्ध" इति। यत्तु मनवे दानं तदयमर्धर्च आह। यं त्वा देवासो मनवे दधुः दत्तवन्तः। इह लोके इत्यर्थः। अथवा मनुशब्दो मनुष्यपर्यायः। तादर्थ्ये चतुर्थी। दधुरित्यपि द(धा)तिर्निधानार्थः। यं त्वा देवा मनुष्याणामर्थायेह लोके विनिहितवन्त इत्यर्थः। कीदृशम्। यजिष्ठम्। यष्टृतमम्। हे हव्यवाहन! हविषां वोढः! यञ्च कण्वः। सोऽयमित्यभिसम्बन्धात् पुत्रेऽयं पितृशब्दः प्रयुज्यते। कण्वो मेध्यातिथिर्नाम ऋषिः। अथवा कण्वश्च मेध्यातिथिश्च। किम्। ईधे इति शेषः। कुत एतत्। साकाङ्क्षत्वादुत्तरस्यां चर्चि दर्शनात्। कीदृशम् धनस्पृतम्। 'स्पृ' प्रीतिपालनयोः। धनस्य पालयितारं धनेन वा प्रीणयितारं यजमानानाम्। दानार्थे वा सामर्थ्यात् स्पृणोतिः। धनस्य दातारमित्यर्थः। न च केवलो मे(धा? ध्या)तिथिः। किन्तर्हि। यं वृषा नाम ऋषिरी(डे? धे)। यं च उपस्तुतो नाम ऋषिः। किं तस्येति संसीदस्वेति तच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता परया वा तदीयस्याद्यस्यार्धर्चस्यास्य च तुल्यार्थत्वात् पौनरुक्त्यप्रसङ्गात्॥ १०॥

## वेङ्कटमाधवीयम्।

यं त्वा देवासः। यं त्वा देवा मनवे निदधुरस्मिंल्लोके यष्टृतमं हविषां वोढः!, यं च कण्वपुत्रो मेध्यातिथिर्धनस्य स्प्रष्टारं निदधे, यं च वृषा, यं चोपस्तुतः॥ १०॥

इति प्रथमस्य तृतीये नवमो वर्गः॥

---

१. 'का', २. 'ड' क. ख. पाठः. ३. 'स्व' ख. घ. पाठः. ४. 'रस्य तं' घ. पाठः.

यमग्निंमेध्यातिथिःकण्वईधऋतादधि ।
तस्यप्रेषोदीदियुस्तमिमाऋचस्तमग्निंवर्धयामसि ॥ ११ ॥

यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि । तस्य । प्र । इषः । दीदियुः । तम् । इमाः । ऋचः । तम् । अग्निम् । वर्धयामसि ॥ ११ ॥

## स्कन्दस्वामीयम् ।

यमग्निं मेध्यातिथिः । अत्रेतिहासमाचक्षते — "मेध्यातिथिरादित्या-दग्निमाहृत्य समीध" इति । तदेतदिहोच्यते । यमग्निं मेध्यातिथिः कण्वः काण्वः । अथवा कण्वः मेध्यातिथिश्च ईधे दीपितवान् । ऋतादधि । आदि-त्योऽत्र ऋतशब्देनोच्यते । अधीति चोपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आदि-त्यादधिगम्य लब्ध्वा । आदित्यादानीयेत्यर्थः । तस्य सम्बन्धिन्यः । इषः अन्नानि । प्रदीदियुः प्रकर्षेण दीप्यन्ते । केन पुनः सम्बन्धेन सम्बन्धीन्य-न्नानि प्रदीप्यन्ते । तद्वृत्ततया । तेन यानि यष्टृभ्योऽन्नानि दत्तानि तानि न कुतश्चिन्न्यूनीभवन्तीत्यर्थः । य ईदृशः, तमग्निमिमाः अस्मदीया ऋचः वयं च तमेवाग्निम् अन्याभिरपि स्तुतिभिः वर्धयामसि । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते तमिमा ऋचो वयं चान्याभिरपि स्तुतिभिर्वर्धयाम इति ॥ ११ ॥

## वेङ्कटमाधवीयम् ।

यमग्निम् । यमग्निं कण्वपुत्रो मेध्यातिथिर्यज्ञान् जनयित्वा समीधे तद(र्धे?र्थे)मेतान्यन्नानि प्रदीप्यन्ते, तथा तमिमा ऋचो वर्धयन्ति । तं वयं च वर्धयामः ॥११॥

रायस्पूर्धिस्वधावोस्तिहितेग्नेदेवेष्वाप्यम् ।
त्वंवाजस्यश्रुत्यस्यराजसिसनोमृळमहांअसि ॥ १२ ॥

रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् । त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ १२ ॥

## स्कन्दस्वामीयम् ।

रायो धनस्य वाचकः । पूर्धि पूरयास्मान् । अथवा द्वितीयाबहुवचनम् । पूर्धीत्यपि याच्ञाकर्म । याच्ञयात्र दानं लक्ष्यते । धनानि देहीत्यर्थः । हे स्वधावः! अन्नवन्! । किं कारणम् । उच्यते । अस्ति हि ते । हिशब्दो यस्मादर्थे । यस्मादस्ति ते तव । हे अग्ने! । देवेषु । निर्धारण एषा सप्तमी । देवानां मध्ये । आप्यम् आप्तव्यम् । यदस्माभिरर्थिभिर्मनुष्यैर्देवेभ्यः आप्तव्यं तद् देवानां मध्ये यस्मात् तवैवास्ति नान्यस्य कस्यचिदित्यर्थः । अथवाप्य-मित्यापिशब्दस्य ज्ञातिवचनस्य भावप्रत्ययान्तस्य रूपम् । यस्मादस्ति तव आपित्वं ज्ञातित्वम् । यस्मात् तव देवा ज्ञातयः । ज्ञातित्वाच्च तदीयानि धनानि त्वां ददतमनुमन्यन्त इत्यर्थः । परोऽर्धर्चो भिन्नं वाक्यम् । स नो मृळेति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यस्त्वम् वाजस्यान्नस्य श्रुत्यस्य श्रोतव्यस्यात्यन्तोत्कृष्टस्य । अथवा श्रुत्यस्य श्रुतस्य प्रख्यातस्य । राजसि ईशिषे । सः नः अस्मान् मृळ सुखय । किं कारणम् । यस्मान्महानसि प्रभावतः । महाप्रभावाश्चाश्रितानां सुखकरा भवन्ति ॥ १२ ॥

### वेङ्कटमाधवीयम् ।

रायस्पूर्धि । धनेन पूरयान्नवन्! । अस्ति हि तेऽग्ने! देवेषु धनेश्वरेषु ज्ञातेयम् । त्वमन्नस्य श्रोतव्यस्येश्वरो भवसि । सोऽस्मान् सुखय महान् भवसि ॥ १२ ॥

**ऊर्ध्वऊषुणऊतयेतिष्ठादेवोनसविता ।**

**ऊर्ध्वोवाजस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥**

ऊर्ध्वः । ऊम् इति । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता । ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिऽभिः । वाघत्ऽभिः । विऽह्वयामहे ॥ १३ ॥

## स्कन्दस्वामीयम् ।

ऊर्ध्व इत्येतत् तिष्ठेत्येतेन सम्बन्धयितव्यः । ऊ सु इति पदपूरणौ । नः अस्माकम् । ऊतये पालनाय । ऊर्ध्वस्तिष्ठ उत्तिष्ठ व्याप्रियस्वेत्यर्थः । कथम् । देवो न सविता । यथा सविता देवः सर्व(स्या ? दा)स्माकं पालनायोत्तिष्ठति, तद्वत् । न च केवलाय पालनाय । किं तर्हि । ऊर्ध्वो वाजस्य

सनिता । सनितिर्लाभार्थः । चतुर्थ्याश्चायं टादेशः । अन्नस्यापि लाभायोत्तिष्ठ । कस्मात् । उच्यते । (यत्) यस्मात् । अञ्जिभिः । छन्दांस्यञ्जय उच्यन्ते । तैः । वाघद्भिः । वाघत इत्यृत्विङ्नाम । आत्मीयैः ऋत्विग्भिः । विह्वयामहे । ह्वयति-रत्रान्तर्णीतण्यर्थः । यज्ञेषु नित्यं विविधं ह्वयामः । यस्मात् नित्यं यज्ञेषु त्वामाहूय यजामह इत्यर्थः ॥ १३ ॥

## वेङ्कटमाधवीयम् ।

ऊर्ध्वं ऊषुणः । यथा सविता सर्वरक्षार्थमूर्ध्वस्तिष्ठति, एवमस्मद्रक्षार्थमूर्ध्व-स्तिष्ठ । तथाच सन् भवानन्नस्य दाता यदा वयमाज्येन त्वामञ्जिभिर्ऋत्विग्भिर्विविधं ह्वयामहे ॥ १३ ॥

ऊर्ध्वोनःपाह्यंहसोनिकेतुनाविश्वंसमत्रिणंदह ।
कृधीनऊर्ध्वाञ्चरथायजीवसेविदादेवेषुनोदुवः ॥ १४ ॥

ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वम् । सम् । अत्रिणम् । दह । कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ॥ १४ ॥

## स्कन्दस्वामीयम् ।

ऊर्ध्वतयात्र यत्नो लक्ष्यते । ऊर्ध्वो यत्नवान् । नः अस्मान् । पाह्यंहसः । निपाहि नियमे(न) रक्ष । अंहसः पापात् । किञ्च, केतुना । केतुरिति प्रज्ञानाम । इह तु प्रज्ञानात्मकत्वाद् दाहकत्वाद् दाहकरणत्वोपपत्तेश्च ज्योतिषि वर्तते । स्वेन ज्योतिषा । विश्वं सर्वम् । अत्रिणम् । अत्रिशब्दो रक्षोवचनः । अत्तारं राक्षसं सन्दह । किञ्च, कृधि कुरु । नः अस्मान् । ऊर्ध्वान् । ऊर्ध्व-तयात्र व्यापारसामर्थ्यमविकलशरीरता च लक्ष्यते । अविकलशरीरान् सर्व-व्यापारसमर्थान् । किमर्थम् । चरथाय चरणाय गमनाय । जीवसे जीवनाय । किञ्च, विदाः जानीहि । ज्ञानेनात्र करणं प्रतिपाद्यते । कुरु । देवेषु । षष्ठ्यर्थे सप्तम्येषा । देवानाम् । नः । तादर्थ्ये एषा चतुर्थी । अस्माकमर्थाय । दुवः परिचर्याः । अस्मदर्थं देवान् परिचरेत्यर्थः । अथवा न इति षष्ठी । अस्माकं या देवानां परिचर्या, तां जानीहि । ज्ञात्वा चानुरूपं फलं देहीत्यर्थः । यदा

१. 'धा', २. 'र्ध्वस्तिष्ठ' ग. घ. पाठः. ३. 'र्याणाम् । अ' घ. पाठः.

यूपोच्छ्रयणे विनियोगात् तत्र प्रयुज्यमाने यूपदेवत्ये एते ऋचौ भवतः, यदाश्रित्य शौनकेनोक्तम् — "ऊर्ध्व ऊषुण ऊतये। एते काण्व्यावृचौ यौप्यौ" इति, तदाप्यूर्ध्वस्तिष्ठेत्युच्छ्रियमाणो यूप उच्यते नाग्निः। ऊर्ध्वश्च सन् पशोर्बन्धनतामापद्यमानः नः पाहीति विशेषः। शिष्टं समानम् ॥ १४ ॥

**वेङ्कटमाधवीयम्।**

ऊर्ध्वो नः। ऊर्ध्वोऽस्मान् रक्षसो निपाहि। तेजसा विश्वं रक्षः सन्दह। कुरु चास्मानूर्ध्वान् चरणाय जीवनाय च। वेदेषु देवेभ्य [illegible] ॥ १४ ॥

**पाहिनोअग्नेरक्षसःपाहिधूर्तेरराव्णः।**
**पाहिरीषतउतवाजिघांसतोबृहद्भानोयविष्ठ्य ॥ १५ ॥**

**पाहि। नः। अग्ने। रक्षसः। पाहि। धूर्तेः। अराव्णः। पाहि। रिषतः। उत। वा। जिघांसतः। बृहद्भानो इति बृहत्ऽभानो। यविष्ठ्य ॥ १५ ॥**

**स्कन्दस्वामीयम्।**

हे अग्ने! रक्षसः राक्षसात् पाहि। धूर्तेः हिंसितुः मारयितुः। अराव्णः अदातुर्हविषाम्। अयागशीलादित्यर्थः। पाहि रीषतः। रेषणं हिंसा ताडनलक्षणात्राभिप्रेता। प्रहारैस्ताडयतः। उत वा जिघांसतः हन्तुमिच्छतः। हे बृहद्भानो! महादीप्ते!। यविष्ठ्य! युवतम! ॥ १५ ॥

**वेङ्कटमाधवीयम्।**

पाहि नो अग्ने!। पाह्यस्मानग्ने! रक्षसः। पाहि हिंसितुरदातुश्च। पाहि न्यूनीकर्तुरपिच ताडितुर्महादीप्ते! युवतम ॥ १५ ॥

इति प्रथमस्य तृतीये दशमो वर्गः ॥

---

**घनेवविष्वग्विजह्यराव्णस्तपुर्जम्भयोअस्मध्रुक्।**
**योमर्त्यःशिशीतेअत्यक्तुभिर्मानःसरिपुरीशत ॥ १६ ॥**

**घनाऽइव। विष्वक्। वि। जहि। अराव्णः। तपुःऽजम्भ। यः। अस्मऽध्रुक्। यः। मर्त्यः। शिशीते। अति। अक्तुऽभिः। मा। नः। सः। रिपुः। ईशत ॥ १६ ॥**

## स्कन्दस्वामीयम् ।

तप्तं लोहं येन हन्यते स घन उच्यते । तृतीयैकवचनस्यायमाकारः । यथा लोहकारस्तप्तं लोहं घनेन हन्यादेवं विष्वक् नानाभूतानपि विजहि । अराव्णः अदातॄन् हविषः । अयष्टॄनित्यर्थः । हे तपुर्जम्भ ! । 'इमं जम्भ सुतं पिबे'ति प्रयोगदर्शनात् जम्भशब्दोऽत्र दंष्ट्रावचनः । तापयितृदंष्ट्र ! तीक्ष्ण-दंष्ट्रेत्यर्थः । न च केवलानराव्णः । किन्तर्हि । यो अस्मध्रुक् यः अस्मान् द्रोग्धा (तमपि) । अथवा यो अस्मध्रुगिति परेण सम्बध्यते । यो अस्मद्ध्रुक्, यश्च मर्त्यः मनुष्यः । शिशीते अति । 'शो तनूकरणे' अतिशिशीते सुष्ठु तनूकरोति । केन । अक्तुभिः । अक्तुशब्दोऽत्र सामर्थ्यादायुधवचनः । आयुधैः । सामर्थ्याद् अस्मानायुधैस्तनूकरोति[1] कर्शयति । अथवा अक्तुभिरिति द्वितीयार्थे तृतीया । यश्चाक्तून्यायुधानि अतिशिशीते सुष्ठु निश्यतीत्यर्थः । मा नः अस्माकम् । स रिपुः शत्रुः । ईशत ईशिष्ट । मा तस्य वशवर्तितां गमामेत्यर्थः ॥ १६ ॥

### वेङ्कटमाधवीयम् ।

घनेव । यथा तप्तं लोहपिण्डं कार्मारो घनेन विष्वग्घन्ति, एवमदातॄन् सर्वतोभेदिकं जहि तापयितृदंष्ट्र ! । यो वास्मान् द्रोग्धा, यो वास्मान् मर्त्य आयुधै-रत्यन्तं तनूकरोति, स मास्माकं रिपुरीशिष्ट ॥ १६ ॥

**अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगम् ।**
**अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतम् ॥**

अग्निः । वव्ने । सुऽवीर्यम् । अग्निः । कण्वाय । सौभगम् । अग्निः । प्र । आवत् । मित्रा । उत । मेध्यऽअतिथिम् । अग्निः । सातौ । उपऽस्तुतम् ॥ १७ ॥

## स्कन्दस्वामीयम् ।

कण्वायेति सम्प्रदानचतुर्थीश्रुतेः 'वंस्वा नो वार्या पुरु' इति प्रयोग-दर्शनात् वनिरत्र दानार्थः । अग्निर्वव्ने दत्तवान् । सुवीर्यं शोभनं वीर्यम् । अग्निरेव मह्यं कण्वाय सौभगं सुधनतां दत्तवान् । अग्निः प्रावत् प्रकर्षेण

1. 'ति । येऽस्माकं सहायास्तानायुधैरुच्छिनत्तीत्यर्थः । अ' ग. पा :.

रक्षितवान् । मित्रा मित्राणि । उत मेध्यातिथिमृषिम् । अग्निः सातौ । सन्यन्ते संभज्यन्ते यत्र धनानि योद्धृभिः स सातिः सङ्ग्रामोऽत्राभिप्रेतः । तत्र उपस्तुतम् उपस्तुतनामानमपरमृषिम् ॥ १७ ॥

वेङ्कटमाधवीयम् ।

अग्निर्वव्रे । अग्निः प्रायच्छत् सुवीर्यं धनम् । अग्निः कण्वाय सुभगत्वम् । अग्निः प्रावन्मित्राणि अपिच मेध्यातिथिम् । अग्निः संग्राम उपस्तुतं चावत् ॥ १७ ॥

**अग्निनां तुर्वशं यदुं परावतं उग्रादेवं हवामहे ।**
**अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ॥ १८ ॥**

**अग्निनां । तुर्वशम् । यदुम् । पराऽवतः । उग्रऽदेवम् । हवामहे । अग्निः । नयत् । नवऽवास्त्वम् । बृहत्ऽरथम् । तुर्वीतिम् । दस्यवे । सहः ॥ १८ ॥**

स्कन्दस्वामीयम् ।

अग्निना । सहयोगलक्षणैषा तृतीया । अग्निना सह । परिचर्यातिशयेन तदनुचरतामापन्नं तुर्वशं यदुं उग्रदेवं च राजानं परावतो दूरात् हवामहे ह्वयामः । परोऽर्धर्चो भिन्नं वाक्यम् । अग्निः नयत् नीतवान् । नववास्त्वं नामासुरं बृहद्रथम् महारथं तुर्वीतिम् । 'तुर्वी धुर्वी दुर्वी' हिंसार्थाः । हिंसाम् । नववास्त्वं हिंसितवानित्यर्थः । अथवा तुर्वीतिरित्यसुरस्य नामधेयम् । अग्निर्नयदिति नयतिः सामर्थ्याद् वधार्थः । नववास्त्वं च तुर्वीतिं चाग्निर्हतवानित्यर्थः । कम् । दस्यवे । द्वितीयार्थे चतुर्थ्येषा । दस्युं शत्रुम् । सहः । बलनामैतद् अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम् । सहस्वन्तं बलवन्तम् । अथवा सह इति तृतीयार्थे द्वितीया । बलेन नीतवान् इति । यद्यपि 'अहं स यो नववास्त्वमि'ति दर्शनादिन्द्रेण नववास्त्वो हत इत्यवगम्यते, तथापि महाभाग्याद् देवतानाम् अत एव च दर्शनादग्निनापि हत एवेत्यवबोद्धव्यम् ॥ १८ ॥

वेङ्कटमाधवीयम् ।

अग्निना तुर्वशम् । अग्निना सह दूरात् तुर्वशं यदुमुग्रदेवं च राजर्षीनाह्वयामोऽग्निर्नववास्त्वादीन् त्रीननयदुपक्षपथि(त्या ? त्र)भिभविता ॥ १८ ॥

निस्त्वामग्नेमनुर्दधेज्योतिर्जनायशश्वते ।

दीदेथकण्वऋतजातउक्षितोयंनमस्यन्तिकृष्टयः ॥ १९ ॥

नि । त्वा । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते । दीदेथ । कण्वे । ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति । कृष्टयः ॥ १९ ॥

स्कन्दस्वामीयम् ।

त्वां हे अग्ने ! मनुर्निदधे पृथिव्यां निहितवान् । ज्योतिः । अन्तर्णीत-मत्वर्थमेतद् द्रष्टव्यम् । ज्योतिष्मन्तम् । जनाय शश्वते बहवे । बहूनां मनुष्या-णामर्थाय । दीदेथ दीप्यस्व । कण्वे । 'यस्य च भावेन—' (२-३-३७) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । यस्त्वं कण्वे यजति । ऋतजातः । ऋतो यज्ञः, तत्र जातः उत्पन्नः । अथवा ऋत आ-दित्यः, ततो जातः । आदित्यादाहृत इत्यर्थः । तदुक्तं— 'यमग्निं मेध्या-तिथिः कण्व ईध ऋतादधी'ति । उक्षितः । 'उक्ष सेचने' । आहुत्याज्येन सिक्तः । कीदृशम् । उच्यते । यं नमस्यन्ति । परिचरणकर्मायम् । परिचरन्ति । कृष्टयो मनुष्याः । ॥ १९ ॥

वेङ्कटमाधवीयम् ।

नि त्वामग्ने । निदधे त्वामग्ने! मनुरनेकस्मै जनाय ज्योतिर्भूतम् । स दीप्यस्व कण्वे मयि यज्ञाज्जातो हविर्भिरुक्षितो, यं त्वां नमस्यन्ति मनुष्याः ॥ १९ ॥

त्वेषासोअग्नेरमवन्तोअर्चयोभीमासोनप्रतीतये ।

रक्षस्विनःसदमिद्यातुमावतोविश्वंसमत्रिणंदह ॥ २० ॥

त्वेषासः । अग्नेः । अमऽवन्तः । अर्चयः । भीमासः । न । प्रतिऽइतये । रक्षस्विनः । सदम् । इत् । यातुऽमावतः । विश्वम् । सम् । अत्रिणम् । दह ॥ २० ॥

स्कन्दस्वामीयम् ।

त्वेषासः दीप्ताः । अग्नेः स्वभूताः । अमवन्तः । आत्मपर्यायममशब्दं व्याचक्षते । आत्मवन्तः यत्नवन्त इत्यर्थः । अथवा 'अम गत्यादिषु' । गमन-

वन्तः । 'अम रोगे' । तमसो रोगवन्तः । तमसो भङ्गवन्त इत्यर्थः । अर्चयः ज्वालाः । भीमास. । न प्रतीतये न प्रतिगमनाय कस्यचित् । न केनचित् प्रत्यभिभवितुं शक्या इत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । रक्षस्विनः रक्षोजातिमतः । राक्षसानित्यर्थः । कीदृशान् । उच्यते । सदमित् । सदंशब्दः सदाशब्दपर्यायः । इच्छब्द एवार्थे । सदैव । यातुमावतः । मावत इति 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इत्येवं वतुप् । मावतो यातवो यातुमावन्तः । षष्ठीसमासे छान्दसत्वाद् राजदन्तादित्वाद् वा परनिपातः । तान् यातुमावतः । मत्सदृशस्याप्युपरि रक्षोभूतानित्यर्थः । अथवा यातुधानैर्निर्मीयमानत्वाद् यातुमा हिंसा । तद्वतो यातुमावतः । विश्वं सर्वं च अत्रिणम् अत्तारमस्माकं व्याघ्रादिकं संदह ॥ २० ॥

### वेङ्कटमाधवीयम् ।

त्वेष सः । दीप्ता अग्नेर्बलवन्तोऽर्चयो भयङ्करा न प्रतिगमनाय । रक्षोभिरभिभवितृभिर्युक्तात् सदैव यातुमावतो यो मत्सदृशस्त्वामुपगच्छति तस्माद् विश्वं रक्षः सन्दहेति ॥ २० ॥

इति प्रथमस्य तृतीये एकादशो वर्गः ॥

---

**क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् ।**
**कण्वा अभि प्र गायत ॥ १ ॥**

क्रीळम् । वः । शर्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वाः । अभि । प्र । गायत ॥ १ ॥

### स्कन्दस्वामीयम् ।

त्रीणि सूक्तानि मरुतः । त्रीण्येतानि सूक्तानि मरुद्देवत्यानि । क्रीळं क्रीडनस्वभावकम् । वः । प्रथमायाः स्थान इयं द्वितीया । यूयम् । शर्धो बलं मारुतं मरुतां स्वभूतं, मरुत्समूहरूपं वा । अनर्वाणम् । ऋ गतौ । अन्यत्राश्रिततया गन्ता अर्वा । आश्रित इत्यर्थः । ततोऽन्यः अनर्वा, तमनर्वाणम् ।

---

१. 'दिवत् पर' ग. घ. पाठः. २. 'रं सन्दह व्या' ग. पाठः.

शर्धसश्च नपुंसकस्य विशेषणत्वाद् व्यत्ययेनात्र पुल्लिङ्गता। अन्यत्रानाश्रितमित्यर्थः। रथेशुभम्। रथेषु व्यवस्थितं यच्छोभते तद् रथेशुभम्। हे कण्वाः! कण्वस्य पुत्राः! अभिप्रगायत। गायतिरर्चतिकर्मा। अभिप्रेत्यनयोश्चात्र विपर्ययो द्रष्टव्यः। प्राभिगायत प्रकर्षेणाभिष्टुत ॥ १ ॥

वेङ्कटमाधवीयम्।

क्रीळं व। क्रीळमानं यूयं मरुतां वेगमप्रत्यृतमन्यस्मिन् रथे यः शोभते तं कण्वा! अभिप्रगायत ॥ १ ॥

येपृषतीभिर्ऋष्टिभिःसाकंवाशीभिरञ्जिभिः।

अजायन्त स्वभानवः ॥ २ ॥

ये। पृषतीभिः। ऋष्टिभिः। साकम्। वाशीभिः। अञ्जिऽभिः। अजायन्त। स्वऽभानवः ॥ २ ॥

स्कन्दस्वामीयम्।

ये मरुतः। पृषतीभिः। आदिष्टोपयोजनमेतद् अश्वनाम। पृषद्वर्णाभिः बडवाभिः। ऋष्टिभिः। 'अंसेषु व ऋष्टयः' इत्यंसस्थत्वदर्शनात् तूणाः शक्तयो वा ऋष्टय उच्यन्ते। ताभिश्च साकं सह। वाशीभिः। आयुधविशेषो वाश्या। ताभिश्च। अञ्जिभिः रत्नप्रायाण्याभरणानि अञ्जयः। तैश्च। अजायन्त स्वभानवः स्वदीप्तयः। अपराश्रयविभूतयः सर्वोपकरणैः सहैव ये जाता इत्यर्थः। तेषां शर्धोऽभिप्रगायतेत्येवं यच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता परया वा ॥ २ ॥

वेङ्कटमाधवीयम्।

ये पृषतीभिः। ये पृषद्वर्णैरश्वैर्ऋष्टिभिश्चांसस्थैः साकं वाशीभिश्च कटहाकारैरायुधैराभरणैश्चाञ्जनसाधनैः सह प्रादुर्भवन्ति स्वदीप्तयः, तेषां शर्ध इति ॥ २ ॥

इहेवशृण्वएषांकशाहस्तेषुयद्वदान्।

नियामंश्चित्रमृञ्जते ॥ ३ ॥

इहऽइव शृण्वे। एषाम्। कशाः। हस्तेषु। यत्। वदान्। नि। यामन्। चित्रम्। ऋञ्जते ॥ ३ ॥

## स्कन्दस्वामीयम् ।

इवशब्द 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग'इति पदपूरणः । एवशब्दार्थे वा । ये पृषत्यादिभिः सहैव अजायन्त, तेषामेषाम् इहेव पृथिव्यामेव । शृण्वे । लिडेतत् कर्मणि व्यत्ययेन रूपम् । लडर्थे च लिट् । श्रूयते । किम् । सामर्थ्यात् शब्दः । कदा । उच्यते । कशाः । अश्वघ्न्यः कशा उच्यन्ते । ताः । हस्तेषु । सप्तमीनिर्देशात् स्थिता इति शेषः । यत् यदा । वदान् वदन्ति । हस्तैर्गृहीताः कशाः अश्वानाघ्नन्त्यः शब्दं यदा कुर्वन्तीत्यर्थः । यदा च यामन् रथं चित्रं विचित्रं पूज्यं वा । ऋञ्जते । ऋञ्जतिः प्रसाधनकर्मान्यत्र । इह तु सामर्थ्याद् गत्यर्थोऽन्तर्णीतण्यर्थश्च । निगमयन्ति नियतेन मार्गेण गमयन्ति । यदाश्वैः रथेन वा गच्छन्तीत्यर्थः ॥ ३ ॥

### वेङ्कटमाधवीयम् ।

इहेव शृण्वे । यदामी गमनप्रारम्भे हस्तस्था वादयन्त्यश्वाजिनीस्तदानीं समीपस्थितानामिव कशानामाहननशब्दः श्रूयते । किञ्चैते गमनप्रारम्भे प्रसाधनमात्मनश्चित्रं कुर्वन्ति ॥ ३ ॥

प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे ।
देवत्तं ब्रह्म गायत ॥ ४ ॥

प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे । देवत्तम् । ब्रह्म । गायत ॥ ४ ॥

## स्कन्दस्वामीयम् ।

व इति प्रथमार्थे द्वितीया । युष्मत्पुत्रादयः ऋत्विजो वा । शर्धाय बलाय मारुताय । घृष्वये । अपठितमपि महन्नामैतत् । महते । त्वेषद्युम्नाय । द्युम्नं द्योततेर्यश इहाभिप्रेतम् । दीप्तयशसे । शुष्मिणे बलवते । देवत्तम् । 'देङ् रक्षण' इत्यस्यायं छान्दसत्वादनुपसर्गादपि 'अच उपसर्गात् तः' (७-४-४७) इत्येवं तकारः । देवेभ्यो मरुद्भ्यो दत्तं रक्षितं देवदत्तम् । अस्माभिर्मरुदर्थमुपकल्पितमित्यर्थः । अथवा देवत्तमिति ददातेरेव रूपम् ।

१. 'द्योप' क. ख. पाठः.

देवेनेन्द्रेण दत्तं देवदत्तमिति । अत्र चेतिहासमाचक्षते—'अदितिः किल शत्रुहननसमर्थं पुत्रमिच्छन्ती कश्यपमुपचचार। तां स परितुष्ट उवाच 'जनिष्यते तवेदृशः पुत्रः यदि गर्भं प्रयता वर्षसहस्रं धारयिष्यसी'ति। तथेत्यदितिः प्रतिपेदे। तच्छ्रुत्वेन्द्रः छिद्रान्वेषी तां शुश्रूषाञ्चक्रे । सा कदाचिदिन्द्रस्य उत्सङ्गे शिरो निधाय मुक्तकेशी विवृतोपस्थद्वारा सुष्वाप । तामप्रयतामासाद्येन्द्रस्तस्या उपस्थं प्रविश्य तं गर्भं सप्तधा वज्रेण चिच्छेद । स छिन्नो रुरोद । तमिन्द्रः प्रत्येकं पुनः सप्तधा चिच्छेद । त एवं सप्तसप्तका मरुतां गणाः। प्रबुद्ध्वादितिर्ज्ञात्वेन्द्रमुवाच 'ममैवायमपराधस्तेन न त्वा शपामि। सह सख्यमुपेहि । भागधेयमेषां प्रकल्पये'ति । 'तैः सहेन्द्रः सख्यमुपेत्य तान् स्तुतिभाजो हविर्भाजश्च चकारे'ति तदेतदुच्यते । देवेनेन्द्रेण दत्तं ब्रह्म स्तुतिलक्षणम् । प्रगायत । 'कै गै शब्दे' । प्रशब्दयत प्रकर्षेणोच्चारयतेत्यर्थः ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

प्र वः शर्धाय । प्रगायत यूयं[2] वेगवते वृक्षादीनां घर्षणं कुर्वते दीप्तयशसे बलवते मारुताय देवदत्तं भाग्याञ्छब्धं देवदत्तं ब्रह्म ॥ ४ ॥

**प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् ।**
**जम्भे रसस्य वावृधे ॥ ५ ॥**

प्र । शंस । गोषु । अघ्न्यम् । क्रीळम् । यत् । शर्धः । मारुतम् । जम्भे । रसस्य । ववृधे ॥ ५ ॥

### स्कन्दस्वामीयम् ।

क्रीळं यदिति यच्छब्दश्रुतेस्तच्छब्दोऽत्राध्याहार्यः । तत् । प्रशंस । 'शंस स्तुतौ' । आत्मन एवायमन्तरात्मनः प्रैषः । प्रकर्षेण स्तुहि हे अन्तरात्मन्! । गोषु । निमित्त एषा सप्तमी । प्रयोजनस्य हेतुत्वेन विवक्षा । गोषु निमित्तभूतासु । गवार्थमित्यर्थः । अघ्न्यम् अहन्तव्यं शत्रुभिर्हन्तुमशक्यं यत् कतमत् । उच्यते । क्रीळं यच्छर्धो मारुतं तत् । किं करोति ।

१. 'ते' ग., २. 'ध्विति नि' ग. घ. पाठः.

उच्यते । जम्भे । जम्भतिरत्र सामर्थ्यात् पानार्थः । तृतीयार्थे च सप्तमी । जम्भेन पानेन । रसस्य सोमरसस्य । ववृधे वीर्येण वर्धते ॥ ५ ॥

वेङ्कटमाधवीयम् ।

प्रशंस । प्रस्तुहि गोषु स्थितमहन्तव्यं क्रीळमानं यच्छर्धो मारुतं तद् रसस्य पयसोऽन्तर्ववृधे । जम्भशब्द उदरवचनः । "पृश्निये वै पयसो मरुतो जाता" इति ब्राह्मणम् ॥ ५ ॥

इति प्रथमस्य तृतीये द्वादशो वर्गः ॥

---

कोवोवर्षिष्ठआनरोदिवश्चग्मश्चधूतयः ।
यत्सीमन्तंनधूनुथ ॥ ६ ॥

कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च धूतयः । यत् । सीम् । अन्तम् । न । धूनुथ ॥ ६ ॥

स्कन्दस्वामीयम् ।

कः वः । निर्धारण एषा षष्ठी । युष्माकं मध्ये । वर्षिष्ठः वृद्धतमः । न कश्चिदपि वृद्धतमः । सर्वे सवयस्का इत्यर्थः । हे नरः! मनुष्याकाराः । दिवश्च ग्मश्च द्युलोकस्य पृथिव्याश्च आधूतयः! आकम्पयितारः! । कीदृशाः वयम् । उच्यते । यत् ये । सीमिति परिग्रहार्थीयः । सर्वं जगत् । अन्तं न अन्तमिव । यथा कश्चिच्छालाया वंशस्य वाऽन्तं धूनुयाद्, एवं धूनुथ भयेन कम्पयथेत्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

को वो वर्षिष्ठः । यदा मरुतः! समीपमिव सर्वमेव परिगृह्य कम्पयथ, तदानीं मरुतो युष्माकं को वर्षितृतमो दिवश्च पृथिव्याश्च कम्पयितारः! । आकारः पूरणः ॥ ६ ॥

निवोयामायमानुषोदध्रउग्रायमन्यवे ।
जिहीतपर्वतोगिरिः ॥ ७ ॥

नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः ॥ ७ ॥

## स्कन्दस्वामीयम् ।

वः युष्माकं स्वभूतम् । यामाय । द्वितीयार्थे चतुर्थ्येषा । यामं रथम् । मानुषः मनुष्यः । निदध्रे 'धृ धारणे' । नियमेन स्वयज्ञे धारयति । अथवा यामशब्दो यागवचनः । स्वार्थ एव च तादर्थ्ये चतुर्थी । युष्माकं यागाय । यूयं यज्ञे यास्यथेत्येवमर्थं मनुष्यो नियमेन धारयति । किम् । सामर्थ्याद् सोमलक्षणानि हवींषि । किमर्थम् । उग्राय मन्यवे । मन्युर्मन्यतेर्दीप्तिकर्मणः दीप्तिरिहाभिप्रेता । उग्रायै दीप्त्यै । प्रकृष्टायैश्वर्यायेत्यर्थः । किञ्च, जिहीत । ओ हाङ् गतौ' । अन्यत्र गच्छति । युष्मद्भयान्नश्यतीत्यर्थः । कीदृशः । पर्वतः । पर्ववान् बह्ववयवकः, महानपि सन्नित्यर्थः । कः । गिरिः मेघो महीधरो वा । अथवा पर्वतो गिरिरिति समुच्चीयमानार्थे, एते न परस्परविशेषणविशेष्यभूते । पर्वतश्च गिरिश्च । मेघश्च महीधरश्चेत्यर्थः । अथवैवमन्यथाऽस्या ऋचो योजना — व इति द्वितीयाबहुवचनम् । यात्यस्मिन् देवता इति यामो यज्ञः । युष्मान् यज्ञाय मनुष्यो नियमेन धारयति । किञ्च, उग्राय मन्यवे जिहीत । मन्युरिति क्रोधनाम । पञ्चम्यर्थे चतुर्थी । उग्रात् क्रोधात् गच्छति । उग्रेभ्यः क्रुद्धेभ्यो युष्म(भ्यं? त्) बिभ्यन्नश्यतीत्यर्थः । कः । पर्वतो गिरिरपि । महान् गिरिः, किमुतान्य इत्यर्थः ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

नि वो यामाय निदध्रे स्थूणादिकं युष्माकं गमनाय, उद्गूर्णायाभिमन्त्रे स्थिरं स्थूणादिकं दृढं निहन्ति मानुषः । पर्ववान् गिरिश्च कम्पते ॥ ७ ॥

कीदृशा यूयम् । उच्यते—

**येषामज्मेषुपृथिवीजुजुर्वाँइवविश्पतिः ।**
**भियायामेषुरेजते ॥ ८ ॥**

येषाम् । अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः । भिया । यामेषु । रेजते ॥ ८ ॥

## स्कन्दस्वामीयम् ।

येषां युष्माकम् । अज्मेषु । 'अज गतिक्षेपणयोः' । गमनेषु । पृथिवी । जुजुर्वाँ इव विश्पतिः । पुत्रपौत्रादीनां मनुष्याणां पतिः विश्पतिः ।

कुलज्येष्ठोऽत्राभिप्रेतः, न राजा। यथा जीर्णोऽत्यन्तं वृद्धः भिया भयेन रेजते कम्पते। यामेष्वित्येतत्तु अज्मेष्वित्येतेन सम्बन्धयितव्यम्। तृतीयार्थे चात्र सप्तमी। यामैः रथैः अज्मेष्विति। येषु युष्मासु रथैर्गच्छत्सु कमप्येते हन्तुं गच्छन्तीत्यजानती पृथिव्यपि भयेन कम्पते, किमुतान्य इत्यर्थः। अथवा येषामित्येतत् भियेत्येतेन सम्बन्धयितव्यम्। तत्सम्बन्धे च 'भीत्रार्थानां —' (१-४-२५) इत्यपादानत्वात् पञ्चम्यर्थे षष्ठी। अज्मेष्वित्यप्यज्मशब्दो गृहनाम। अज्मेषु यामेष्वित्येतच्च समुच्चीयमानार्थे। एतत्सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः। येभ्यो युष्म(भ्यं ? त्) अज्मेषु यामेषु च गृहेषु रथेषु च व्यवस्थितेभ्यः भिया भयेन पृथिवी रेजत इति। येभ्यः स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कम्पत इत्यर्थः। तेषां यामाय मानुष इत्येवं तच्छब्दश्रुतेः पूर्वयचैकवाक्यता परया वा॥ ८॥

## वेङ्कटमाधवीयम्।

येषामज्मेषु। येषामुत्क्षेपकेषु गमनेषु पृथिव्योषधिवनस्पतियुक्ता जीर्णा राजेव परबलागमने कम्पते भिया। पूर्वत्र सम्बन्धः॥ ८॥

**स्थिरं हि जानमेषां वयो मातुर्निरेतवे।**

**यत्सीमनु द्विता शवः॥ ९॥**

स्थिरम्। हि। जानम्। एषाम्। वयः। मातुः। निःऽएतवे। यत्। सीम्। अनु। द्विता। शवः॥ ९॥

## स्कन्दस्वामीयम्।

हिशब्दः पदपूरणः। येषामज्मेषु येभ्यो वा भिया पृथिवी रेजते, तेषाम् एषां मरुतां स्थिरं जानं जन्म वयश्च यौवनलक्षणम्। यथा मनुष्याः जाताः शीघ्रमेव म्रियन्ते वृद्धीभवन्ति च, न तद्वत् ते मरुत इत्यर्थः। किमर्थम् उच्यते। मातुर्निरेतवे। मातुः सकाशात् निर्गन्तुम्। मातुरुदरे पुनः पुनर्गर्भवासमननुभावितुमित्यर्थः। यो हि म्रियते वृद्धीभवति च तेनावश्यं मातुरुदरे पुनः पुनर्गर्भवासोऽनुभवितव्यः। कीदृशा मरुतः। उच्यते। यत्। षष्ठ्या अत्र लुक्। येषाम्। सीमनु। सीमिति परिग्रहार्थीयः। अन्विति

१. 'षां यज्ञेषु' ग. घ. पाठः.

लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । सर्वं प्रति । द्विता द्विधा द्विविधमपि सांयोगिकं च हस्त्यश्वादि शारीरं च । शवः बलम् । ये द्विविधेनापि बलेन न कुतश्चिन्न्यूना इत्यर्थः ॥ ९ ॥

### वेङ्कटमाधवीयम् ।

स्थिरं हि । स्थिरं हि जन्म मरुतां वयश्च मातुर्निर्गमनाय, न पुनर्जननाय मातरं प्रविशन्ति । यच्चैषां सर्वं जगदनुप्रभवति तद्बलं द्विधा भवति दिवि च पृथिव्यां चेति ॥ ९ ॥

**उदु॒ त्ये सू॒नवो॒ गिर॒ः काष्ठा॒ अज्मे॑ष्वत्नत ।**

**वा॒श्रा अ॑भि॒ज्ञु यात॑वे ॥ १० ॥**

उत् । ऊम् । इति । त्ये । सू॒नव॑ः । गिर॑ः । काष्ठा॑ः । अज्मे॑षु । अ॒त्न॒त । वा॒श्राः । अ॒भि॒ऽज्ञु । यात॑वे ॥ १० ॥

### स्कन्दस्वामीयम् ।

उदित्युपसर्गः अत्नतेत्याख्यातेन सम्बन्धयितव्यः । उ इति पदपूरणः । ये उक्तगुणाः, त्ये ते मरुतः । सूनवः पुत्राः । कस्य । पृश्नेर्वा रुद्रस्य वा । कुत एतत् । "पृश्नेः पुत्राः उपमासो रभिष्ठाः" "रुद्रस्य ये मीढुषः सन्ति पुत्राः" इत्यादिषु मन्त्रान्तरेषु दर्शनात् । गिरः काष्ठाः । आपोऽत्र काष्ठा उच्यन्ते । गर्जितलक्षणा वाचः अपश्च । अज्मेषु । तृतीयार्थे सप्तमी । अज्मैः अजनैः स्वगमनैः । उदत्नत ऊर्ध्वं विस्तारयन्ति । मेघं प्रति स्वयं गत्वा (ग)र्जन्ति, तदीयाश्चापो विक्षिपन्तीत्यर्थः । कीदृशीरपः । वाश्राः । वाशनशीलाः । शब्दकारिणीः, बह्वीरित्यर्थः । कथमुदत्नत । अभिज्ञु । क्रियाविशेषणमेतत् । अभिगतं जानु यस्मिन् उत्तानने तदभिज्ञु । निपात्य जानुं, महता यत्नेनेत्यर्थः । किमर्थम् । यातवे । पृथिवीं गन्तुम् । पृथिव्यां पातनायेत्यर्थः ॥ १० ॥

### वेङ्कटमाधवीयम् ।

उदुत्ये । उदत्नत उत्तता अकुर्वन् विस्तीर्णौषधीरकुर्वन्नमी प्रेरितारं शब्दायन्तो दिशो गमनेषु । यदि गच्छन्त्योषधीभिर्विस्तारयन्ति दिश इति । तथा धेनूश्चाभिगतजानुकं यातुमकुर्वन् । ओषधिसद्भावादुत्क्षिप्तपादाश्चरन्ति धेनव इति ॥ १० ॥

**इति प्रथमस्य तृतीये त्रयोदशो वर्गः ॥**

न च केवलाः गिरः काष्ठाश्च । किं तर्हि —

**त्यंचिद्घादीर्घंपृथुंमिहोनपातममृध्रम् ।**
**प्रच्यावयन्तियामभिः ॥ ११ ॥**

त्यम् । चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् । प्र । च्यवयन्ति । यामऽभिः ॥ ११ ॥

## स्कन्दस्वामीयम् ।

चिदित्यप्यर्थे । घेति पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । योऽयं वैद्युतो नामाग्निः, तमपि । दीर्घं पृथुं मिहो नपातम् । 'मिह सेचने' । सेचनाद् मिड् मेघ उच्यते । नपादित्यपत्यनाम । मेघस्यापत्यभूतम् । मेघाद्धि वैद्युतोऽग्निर्जायते । अथ तु नपादिति पौत्रस्यैव नाम न पुत्रस्य, तत्रादित्यो मिडुच्यते । सोऽपि हि रश्म्याहृताभिरद्भिर्मध्यमं सिञ्चति । ताभ्यश्चाद्भ्यो मेघो जायते । मेघाद् वैद्युत इत्येवमादित्यपौत्रत्वमस्य । अमृध्रम् । मृधिर्हिंसार्थः । अहिंस्यम् अहिंसितारं वा साधूनाम् । अथवा मृध्रशब्दो मृदुपर्यायः । तथाहि यास्केन दर्शितम् । 'दनो विश इन्द्र ! मृध्रवाचः । दानमनसो नो मनुष्यानिन्द्र ! मृदुवाचः कुर्वि' ति । अमृध्रम् । अमृदुं तीक्ष्णम् । अथवा मृध्रशब्दो निर्वीर्यवचनः । एवं हि छाङ्गलेयिनां श्रुतौ प्रयोगः "दक्षिणेन हस्तेन देवानसृजत् । सव्येनासुरान् तेन देवा वीर्यवन्तोऽभवन् । मृध्रा असुरा" इति । अत्र च वीर्यवत्प्रतियोगित्वेनोपादानान्मृध्रशब्दो निर्वीर्यवचन इति गम्यते । अमृध्रं वीर्यवन्तं प्रच्यावयन्ति मेघात् यामाभिः यानैः । विद्युतमपि स्वगमनैरेव कुर्वन्तीत्यर्थः । अथवा दावलक्षणोऽग्निरभिप्रेतः । न वैद्युतः । स हि मिहो नपात् । कथम् । मेघाद् वृष्टिद्वारेण ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्यः सः (इति) तं ग्रीष्मे प्रवृद्धं प्रच्यावयन्ति अपगमयन्ति । यामभिः यानैः । कस्य । सामर्थ्याद् वृष्टिलक्षणानामपाम् । योऽयं दावरूपोऽग्निः । तमपि वृष्टिं गमयन्तोऽपनयन्तीत्यर्थः ॥ ११ ॥

वेङ्कटमाधवीयम्।

त्यं चिद् घा त्यं चित् खलु दीर्घं विस्तीर्णं मेघस्य पुत्रममृदुं गमनैः प्रच्या-वयन्ति मरुत इति शिलोच्चयाभिप्रायमिति ॥ ११ ॥

मरुतोयद्धवोबलंजनाँअचुच्यवीतन।

गिरीँरचुच्यवीतन॥ १२॥

मरुतः। यत्। ह। वः। बलम्। जनान्। अचुच्यवीतन।

गिरीन्। अचुच्यवीतन ॥ १२ ॥

स्कन्दस्वामीयम्।

हे मरुतः! यद् वो बलम्। ह इति पदपूरणः। यद्ध वो बलं असुरजनान्[1] अचुच्यवीतन स्वराष्ट्रेभ्यश्च्यावितवत्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तदेव। गिरीनपि मेघान् पर्वतान् वा अचुच्यवीतन च्यावयन्ति॥ १२॥

मरुतो यद्ध वो। मरुतो यद् वो बलं तज्जनान् च्यावयति तच्छिलोच्चयानपि च्यावयति ॥ १२ ॥

यद्धयान्तिमरुतःसंहब्रुवतेध्वन्ना।

शृणोतिकश्चिदेषाम्॥ १३॥

यत्। ह। यान्ति। मरुतः। सम्। ह। ब्रुवते। अध्वन्।

आ। शृणोति। कः। चित्। एषाम्॥ १३॥

यत् यदा यान्ति मरुतः, यान्तश्च संब्रुवते परस्परेण सम्भाषन्ते। अध्वन्ना। आ इत्युपसर्गोऽत्राध्यर्थे। अध्वनोऽधि अध्वन उपरि। अध्वनी-त्यर्थः। यदेति वचनात् तदेत्यध्याहार्यम्। तदा शृणोति कश्चिदेषां मरुतां सम्भाषणं, न सर्वः। यस्यैवैते मरुतः प्रसादवन्तः स एवैतान् गच्छतः अध्वनि भाषमाणान् शृणोति, नापर इत्यर्थः॥ १३॥

वेङ्कटमाधवीयम्।

यद्ध यान्ति। यदा खलु यान्ति मरुतस्तदानीं मार्गेऽमी सह शब्दं कुर्वन्ति तं शब्दमेषां कश्चिदपि शृणोति। सर्वो जन आगोपालं शृणोति ॥ १३ ॥

---

१. 'भुज' ग. घ. पाठः.

प्र यात॒ शीभ॑मा॒शुभिः॒ सन्ति॒ कण्वे॑षु वो॒ दुवः॑ ।
तत्रो॒ षु मा॑दया॒ध्वै ॥ १४ ॥

प्र । या॒त॒ । शीभ॑म् । आ॒शुऽभिः॑ । सन्ति॑ । कण्वे॑षु । वः॒ । दुवः॑ । तत्रो॒ इति॑ । सु । मा॒द॒या॒ध्वै॒ ॥ १४ ॥

## स्कन्दस्वामीयम् ।

प्रेत्येष उपेत्येतस्य स्थाने । उपयातास्मान् । शीभम् । क्षिप्रनामैतत् क्षिप्रम् । आशुभिः शीघ्रैरश्वैः । किं कारणम् । उच्यते । यस्मात् सन्ति कण्वेषु । एकस्मिन्नेवात्मनि 'अस्मदो द्वयोश्च' (१-२-५९) इत्येवं बहुवचनम् । पुत्रपौत्राद्यपेक्षं वा । अस्मासु कण्वेषु । वो युष्माकं दुवः परिचर्याः । यस्मादागतान् युष्मान् वयं परिचरिष्याम इत्यर्थः । आगत्य च तत्रोषु । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । योऽस्मदीयो यज्ञो वेदिर्वा तत्र सुष्ठु । मादयाध्वै । 'मद तृप्तौ' । तर्पयतात्मानम् ॥ १४ ॥

## वेङ्कटमाधवीयम् ।

प्र यात । उद्युक्ता भवत क्षिप्रं शीघ्रैरश्वैः । सन्ति कण्वेषु वः परिचर्याः । तत्र सुष्ठु मद(य)त ॥ १४ ॥

कस्माद् उच्यते ।

अस्ति॒ हि ष्मा॒ मदा॑य वः॒ स्मसि॑ ष्मा व॒यमे॑षाम् ।
विश्वं॑ चि॒दायु॑र्जी॒वसे॑ ॥ १५ ॥

अस्ति॑ । हि । स्म॒ । मदा॑य । वः॒ । स्मसि॑ । स्म॒ । व॒यम् । ए॒षा॒म् । विश्व॑म् । चि॒त् । आयुः॑ । जी॒वसे॑ ॥ १५ ॥

## स्कन्दस्वामीयम् ।

हिशब्दो यस्मादर्थे । स्मेति पदपूरणः । यस्मात् तत्रास्ति मदाय वः । किम् । सामर्थ्यात् सोमः । यस्माद् युष्मन्मदकरणसमर्थः सोमोऽस्तीत्यर्थः ।

यस्माच्च स्मसि स्म वयम् । स्मेति पदपूरणः । विद्यामहे वयमपि । एषां युष्माकं मरुतां स्वभूताः । यस्माद् वयमपि युष्माकं परिचारकाः सोमस्यार्पयितारः स्तुतिकराश्च[1] विद्यामह इत्यर्थः । यस्माच्च विश्वं चिदायुः । विश्वमिति बहुनाम । चिच्छब्दोऽप्यर्थे, आयुरित्यस्माच्च परो द्रष्टव्यः । आयुरित्येतच्चात्रान्ननाम, अन्नमपि बह्वस्तीत्यर्थः । किमर्थम् । जीवसे । जीवनाय, जीवितुम् , अस्मज्जीवनार्थम् । यत् सोमेनात्मानं तर्पयित्वा जीवनायास्मभ्यमन्नं दास्यथ, तदपि बह्वस्तीत्यर्थः ॥ १५ ॥

### वेङ्कटमाधवीयम् ।

अस्तिहिष्म । अस्ति हि मदाय वोऽस्मासु स्तोत्रम् । तथैषां भवतां स्तोतव्यं परिपूर्णमायुर्जीवितुं भवामः ॥ १५ ॥

इति प्रथमस्य तृतीये चतुर्दशो वर्गः ।

---

कद्धं नूनं कधप्रियः पिता पुत्रं न हस्तयोः ।
दधिध्वे वृक्तबर्हिषः ॥ १ ॥

कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽबर्हिषः ॥ १ ॥

### स्कन्दस्वामीयम् ।

कच्छब्दः कदेत्यस्य पर्यायः । हं नूनमिति पदपूरणौ । कदा हे कधप्रियः! । कमुदकं, तद् दधाति धारयतीति कधो मेघः । स प्रियो येषां ते कधप्रियः[2]! । व्यत्ययेनैकवचनं द्रष्टव्यम् । अथवा कध आदित्यः, उदकस्य धारयितृत्वात्, प्रजापतिना वा प्रकाशाद्यर्थं निहितत्वात् । 'प्रीञ् तर्पणे' । तर्पयिता प्रियः । आदित्यस्तर्पयिता येषां ते कधप्रियः[3] । मरुतो हि वर्षासु रश्म्याहृतैरुदकैरादित्येन तर्प्यन्ते । तेषां सम्बोधनं हे कधप्रियः! । पिता पुत्रं न हस्तयोः । यथा पिता बालकं पुत्रं लाळयन् हस्तयोर्धारयति, एवं दधिध्वे लाळयन्तो धारयिष्यथ । कम् । सामर्थ्यादस्मान् । कदास्मान् लाळयन्तो धारयिष्यथेत्यर्थः । हे वृक्तबर्हिषः । सर्वैर्मनुष्यैर्वृक्तमास्तीर्णं बर्हिर्येषां ते वृक्तबर्हिषः । सर्वमनुष्यैः कृतयागा इत्यर्थः । तेषां सम्बोधनं हे वृक्तबर्हिषः! ॥ १ ॥

---

१. 'भाजश्च' ग. पाठः. २, ३. 'धाः' ग. घ. पाठः.

वेङ्कटमाधवीयम्।

कद्ध नूनम्। सुखं पुरा स्तोत्रप्रीताः पिता पुत्रमिव हस्तयोरस्मान् दधिध्वे यज्ञार्थं छिन्नबर्हिषो मरुतः! ॥ १ ॥

क्वनूनंकद्वोअर्थंगन्तादिवोनपृथिव्याः।
क्ववोगावोनरण्यन्ति ॥ २ ॥

क्व। नूनम्। कत्। वः। अर्थम्। गन्त। दिवः। न। पृथिव्याः। क्व। वः। गावः। न। रण्यन्ति ॥ २ ॥

स्कन्दस्वामीयम्।

कत् नूनमिति पदपूरणः। क्व देशे कदा वा। वः। अर्थम्। 'ऋ गतावि' त्यस्या(स्माद् ? र्थो) गमनमुच्यते। युष्माकं गमनम्। क्व कदा वा यूयं गन्तास्थेत्यर्थः। किमुच्यते। येन पुनः पुनराहूयमानाः। ग(ता ? न्त) दिवो न पृथिव्याः। द्वितीयार्थे षष्ठ्येषा। गच्छथ द्युलोकान्न पृथिवीम्। एतदुक्तं भवति — स्वस्मिन् स्थाने नूनमसन्निहिता एव स्थ, येनाहूयमाना अपि नागच्छथेति। क्व वो गावः। अश्वा अत्र गाव उच्यन्ते। क्व वा युष्माकं स्वभूता गन्तारोऽश्वाः। न रण्यन्ति न रमन्ते। एतदुक्तं भवति — सर्वत्रैव वोऽश्वा रमन्ते। अतोऽस्मत्समीपं[1] किं नागच्छथेति ॥ २ ॥

वेङ्कटमाधवीयम्।

क्व नूनम्। क्व सम्प्रति यूयं स्थ। क्व वो गमनं भवति। गच्छत द्युलोकात्। इहागताश्च न गच्छत पृथिव्याः। क्व युष्मान् पशूनिव रमयन्ति ॥ २ ॥

क्ववःसुम्नानव्यांसिमरुतःक्वसुविता।
को३विश्वानिसौभगा ॥ ३ ॥

क्व। वः। सुम्ना। नव्यांसि। मरुतः। क्व। सुविता। को३इति। विश्वानि। सौभगा ॥ ३ ॥

१. 'पं ना' क. ख. पाठः.

## स्कन्दस्वामीयम् ।

क अन्यत्र । वः युष्माकम् । सुम्ना । सुम्नमिति सुखनाम । परिचर्या-सुखानि । नव्यांसि नवतराणि अस्माभिरनुत्पादितपूर्वाणि । यदिच्छया यूय-मन्यत्र गताः । हे मरुतः! क सुविता । सुवितशब्दः सुगतवचनः । क वा सुगतानि स्थानानि । यत्र च पुनः पुनर्गम्यते, तत् सुगतं भवति । अतो-ऽनेन गमनौचित्यं प्रतिपाद्यते । कान्यत्र भवतामुचितं गमनमित्यर्थः । क्को विश्वानि सौभगा । विश्वमिति बहुनाम । भग इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । क वाऽन्यत्र बहूनि शोभनानि हविर्लक्षणानि धनानि । कान्यत्र परिचर्यातिरेके सुखं (वा गमनौ)चित्यं वा हविरतिरेको वा, येनास्मत्समीपं नागच्छथेति समस्तार्थः ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

क वः सुम्ना । क वः सुखानि नवतराणि मरुतः! । क वा शोभनगमनानि कल्याणानि । अत्र यास्कः—"सुविते सु इते सूते सुगते प्रजायामिति वे"ति । क वा वः सर्वाण्यव सौभगानि ॥ ३ ॥

**यद्यूयंपृश्निमातरोमर्तासःस्यातन ।**

**स्तोतावोअमृतःस्यात् ॥ ४ ॥**

**यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥ ४ ॥**

## स्कन्दस्वामीयम् ।

यच्छब्दो यदिशब्दस्यार्थे । यदि । यूयं हे पृश्निमातरः! । पृश्निवर्णा गौः पृश्निः, सा माता येषां ते पृश्निमातरः । कुत एतत् । "गोमातरो यच्छुभयन्ते अञ्जिभिरि"ति दर्शनात् । अथवा पृश्निर्गौरिति उभे अपि द्यु-नामनी । द्यौर्माता येषां ते पृश्निमातरः । मर्तासः मनुष्याः । स्यातन भवेत । स्तोता वः अस्मदादिः । अमृतो देवः स्यात् । ततः सर्वकामान् युष्माकं संव-र्धयेदिति[1] वाक्यशेषः । कुत एतत् । साकाङ्क्षत्वात्, 'यदग्ने! स्यामहं त्वं,' 'यदिन्द्र यावतस्त्वम्' इत्यादिषु चैवंरूपेषु दृष्टत्वात् । अथवा यदिति वचनात्

---

१. 'समृद्धये' क. ख. पाठः.

तत इत्येतत् तृतीय एव पादेऽध्याहर्तव्यम्। यदि यूयं मर्तासो मनुष्याः स्यातन, ततो युष्मत्प्रसादेन स्तोता वः अमृतः मरणवर्जितः स्यादिति। एतदुक्तं भवति — यूयं चेन्मनुष्या अभविष्यत अवश्यमीदृशीभिः स्तुतिभिः प्रासत्स्यत फलेन स्तोतारं समयोजयिष्यत। देवास्तु भवन्तः। अतो वयं न जानीमः। किं यूयं प्रसत्स्यथ, न, फलेन वा स्तोतारं संयोजयिष्यथ, नेति ॥ ४ ॥

### वेङ्कटमाधवीयम्।

यद् यूयम्। यद्यपि यूयं पृश्निमातरो मर्ता[२] भवेत, तथापि युष्माकं स्तोता भवत्यमृत इति ॥ ४ ॥

**मावो॑मृ॒गोनयव॑सेजरि॒ताभू॒दजो॑ष्यः।**
**प॒थाय॒मस्य॑गा॒दुप॑॥ ५ ॥**

मा। वः। मृ॒गः। न। यव॑से। ज॒रि॒ता। भू॒त्। अजो॑ष्यः। प॒था। य॒मस्य॑। गा॒त्। उप॑॥ ५ ॥

### स्कन्दस्वामीयम्।

मेति प्रतिषेधार्थो भूदित्येतेन सम्बन्धयितव्यः। व इत्यपि षष्ठ्यन्तो जरितेत्येतेन सम्बन्धयितव्यः। मृगो न यवसे। यवसशब्दः सस्यवचनः। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः। यथा सस्यवति देशे सस्यविनाशको मृगः सर्वस्याप्रियः, एवं वो जरिता। जरितेति स्तोतृनाम। युष्माकं स्तोतास्मदादिः। मा भूदजोष्यः अप्रियः। कस्य। सामर्थ्यात् सर्वस्य। सर्वस्यैव प्रियोऽस्त्वित्यर्थः। एतच्चावज्जीवतः स्तोतुराशस्यते। मरणोत्तरकालमपि। पथा यमस्य। यम आदित्यस्तस्य यः पन्थाः देवयानस्तेन। गादुप उपगच्छतु। देवयानेन पथा स्वर्ग[१]लोकमुपगच्छत्वित्यर्थः। अथवा व इत्येतदजोष्य इत्यनेन सम्बध्यते। पथा यमस्येत्यपि यमशब्दो यज्ञवचनः। गादित्यपि मध्यमपुरुषबहुवचनस्य स्थाने प्रथमपुरुषैकवचनम्। मा कदाचिदपि स्तोता युष्माकमप्रियो भूत्। किं तर्हि। स[२]र्वदैव यज्ञस्य यो नियतः पन्थास्तेनोपगच्छत स्तोतारमित्यर्थः ॥ ५ ॥

---

१. 'र्गं' क. ख. पाठः. २. 'सर्वे' ख. पाठः.

वेङ्कटमाधवीयम् ।

मा वो मृगः । मा भूद् युष्माकं मृग इव यवसे स्तोतासेव्यः, मा चोपगमद् यमस्य पथा । नोपगच्छतु मृतो वैवस्वतस्य पथेति ॥ ५ ॥

इति प्रथमस्य तृतीये पञ्चदशो वर्गः ॥

---

मोषुणःपरांपरानिर्ऋतिर्दुर्हणांवधीत् ।
पदीष्टतृष्णयासह ॥ ६ ॥

मो इति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ॥ ६ ॥

स्कन्दस्वामीयम् ।

मो इति निपातः समाहारो निपातान्तरं वा मेत्यस्यार्थे । सु इति पदपूरणः । मा नः अस्मान् परापरा अत्यन्तपरा । युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थः । निर्ऋतिः मृत्युदेवता । दुर्हणा । दुःखं हन्तीति दुर्हणा । मा वधीत् । किन्तर्हि । पदीष्ट । 'प(द्ऌ ? द) गतौ' । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । अस्मत्तोऽपगच्छतु । अथवा परापरेत्येतत् पदीष्टेत्येतेन सम्बध्यते । परापरा गच्छतु, दूरं गच्छत्वित्यर्थः । न च केवला । किन्तर्हि । तृष्णया सह । तृष्णा नाम निर्ऋतेर्दुहिता । अन्यायेन वार्थाभिलाषः तृष्णा । तया सह ॥ ६ ॥

वेङ्कटमाधवीयम् ।

मो षु णः । मैवास्मानधोऽधो दुःखेन हन्तव्यं दारिद्र्यं वधीत् । सा निर्ऋतिर्मदीयया तृष्णया सह पततु । धनसद्भावे हि तृष्णा विनश्यति ॥ ६ ॥

सत्यंत्वेषाअमवन्तोधन्वंश्चिदारुद्रियासः ।
मिहंकृण्वन्त्यवाताम् ॥ ७ ॥

सत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् । आ । रुद्रियासः । मिहम् । कृण्वन्ति । अवाताम् ॥ ७ ॥

स्कन्दस्वामीयम् ।

सत्यमेतत् । त्वेषाः दीप्ताः मरुतः । अमवन्तः । अमशब्द आत्मपर्यायः । आत्मवन्तः, यत्नवन्त इत्यर्थः अथवा (अम) गत्यादिषु । गमनवन्तः

अथवा 'अम रोगे' । शत्रूणां रोगवन्तः रोगभूताः उच्छेदका इत्यर्थः । धन्वञ्चिदा । धन्वेत्यन्तरिक्षनाम । चिच्छब्दोऽप्यर्थे । आ इत्याकार उपसर्गोऽप्यर्थे । अन्तरिक्षेऽप्यधि । निरालम्बनस्यान्तरिक्षस्याप्युपरीत्यर्थः । रुद्रियासः । अपत्येऽर्थे घप्रत्ययो द्रष्टव्यः । रुद्रपुत्राः । (मिहम्) । सेचनाद् मिहः वृष्टिरुच्यते । ताम् । कृण्वन्ति अवातां वातवर्जितां, वातेनानपहार्याम् । निरालम्बनेऽप्यन्तरिक्षे स्थिता निवातं वर्षन्तीत्यर्थः । अथवा धन्वेति मरुदेश उच्यते । तस्याप्युपरि वृष्टिं कुर्वन्ति । अत्यन्तनिरुदकानपि देशान् वृष्ट्योदकवतः कुर्वन्तीत्यर्थः ॥ ७ ॥

### वेङ्कटमाधवीयम् ।

सत्यं त्वेषाः । सत्यं दीप्ता बलवन्तो निरुदकेऽपि देशे रुद्रपुत्रा वृष्टिं कुर्वन्ति निरन्तरम् ॥ ७ ॥

**वाश्रेवविद्युन्मिमातिवत्संनमातासिषक्ति ।**

**यदेषांवृष्टिरसर्जि ॥ ८ ॥**

वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । असर्जि ॥ ८ ॥

### स्कन्दस्वामीयम् ।

विद्युत् यथा वाश्रा वाशनशीला अभिनवप्रसूता गौस्तद्वत् । मिमाति । मिमातिः शब्दकर्मा । मेघान् स्फोटयति, गर्जितलक्षणं शब्दं करोति । वत्सं न माता । यथा च माता वत्सं तद्वत् । सिषक्ति सेवते । उपगच्छतीत्यर्थः । कम् । सामर्थ्यान्मेघं वा मरुतो वा । कदा । उच्यते । यत् यदा । एषां मरुतां स्वभूता वृष्टिः । असर्जि सृज्यते क्षिप्यते । यदैते मरुतः वर्षन्तीत्यर्थः ॥ ८ ॥

### वेङ्कटमाधवीयम् ।

वाश्रेव । प्रसूता धेनुरिव विद्युद् गर्जितशब्दं करोति, वत्समिव माता सचते लोकं, यदेभिर्मरुद्भिर्वृष्टिः सृज्यते ॥ ८ ॥

---

१. 'उद' ग. पाठः.

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन ।

यत्पृथिवीं व्युन्दन्ति ॥ ९ ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन ।

यत् । पृथिवीम् । विऽउन्दन्ति ॥ ९ ॥

स्कन्दस्वामीयम् ।

दिवा चित् तमः कृण्वन्ति । दिवापि तमः कुर्वन्ति मरुतः । पर्जन्येनोदवाहेन उदकवाहिना । उदकवता मेघेनादित्यं छादयन्तो दिवापि तमः कुर्वन्तीत्यर्थः । कदा । उच्यते । यत् यदा । पृथिवीं व्युन्दन्ति विविधं क्लेदयन्ति । यदा वर्षन्तीत्यर्थः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

दिवा चित् । अह्न्यप्यन्धकारं कुर्वन्ति पर्जन्येनोदकवाहेन यदा पृथिवीं क्लेदयन्ति ॥ ९ ॥

अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम् ।

अरेजन्त प्र मानुषाः ॥ १० ॥

अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् ।

अरेजन्त । प्र । मानुषाः ॥ १० ॥

स्कन्दस्वामीयम् ।

अधशब्दः पदपूरणः, अपिचेत्यस्य वार्थे । अपिच स्वनात् शब्दादपि । मरुताम् । विश्वं सर्वम् । आकारस्तु पदपूरणः । सद्म सदनं पार्थिवं पृथिव्यां भवम् । अरेजन्त प्र मानुषाः । मानुषाश्च प्रारेजन्त । भ्यसते रेजत इति भयवेपनयोः । प्रकर्षेण बिभ्यति भयेन कम्पन्ते । मनुष्यग्रहणं चात्र जङ्गममात्रोपलक्षणार्थम् । शब्दादपि मरुतां सर्वस्थावरजङ्गमं च प्रकर्षेण बिभेति भयेन कम्पत इत्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

अध स्वनात् । अनन्तरं मरुतां च स्वनात् पार्थिवं विश्वं सद्मारेजताकम्पत । सीदन्त्यस्मिन्निति सद्म गृहम् । प्रकर्षेण मानुषाश्चारेजन्त ॥ १० ॥

इति प्रथमस्य तृतीये षोडशो वर्गः ॥

मरुतोवीळुपाणिभिश्चित्रारोधस्वतीरनु।
यातेमखिद्रयामभिः॥ ११॥

मरुतः। वीळुपाणिऽभिः। चित्राः। रोधस्वतीः। अनु। यात। ईम्। अखिद्रयामऽभिः॥ ११॥

स्कन्दस्वामीयम्।

मरुतः!। वीळुपाणिभिः। वीळुशब्दोऽत्र दृढवचनः। पाणिशब्दोऽत्राश्वानामग्रपादे खुरे वा वर्तते। दृढाग्रपादैः दृढखुरैर्वा। चित्रा रोधस्वतीरनु। रोधस्वत्य इति नदीनाम। अनुशब्दोऽपि लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः। विचित्रा नदीः प्रति। यात गच्छत। ईमिति पदपूरणः। अखिद्रयामभिः। अखिन्नगामिभिरश्वैः। सर्वदाश्रान्तैरश्वैरित्यर्थः। यज्ञेष्वागच्छन्तः क्रीडार्थं विचित्रा नदीरपि प्रतिगच्छतेति समस्तार्थः॥ ११॥

वेङ्कटमाधवीयम्।

मरुतो वीळुपाणिभिः। मरुतः! दृढैः पाणिभिः सह चित्रा नदीर्लक्षीकृत्य ताः पूरयितुं यात अच्छिद्रैर्गमनैः॥ ११॥

स्थिरावःसन्तुनेमयोरथाअश्वासएषाम्।
सुसंस्कृताअभीशवः॥ १२॥

स्थिराः। वः। सन्तु। नेमयः। रथाः। अश्वासः। एषाम्। सुऽसंस्कृताः। अभीशवः॥ १२॥

स्कन्दस्वामीयम्।

स्थिराः अविचलाः। वः युष्माकं स्वभूताः। सन्तु नेमयः रथचक्रधाराः रथाश्च अश्वाश्च। एषां रथानां सम्बन्धिनः सुसंस्कृताः सुष्ठु संस्कृताः। अभीशवः अश्वप्रग्रहाः। भवतामागच्छतां सर्वाण्यागमनसाधनानि सुदृढानि भवन्त्वित्यर्थः॥ १२॥

वेङ्कटमाधवीयम्।

स्थिरा वः सन्तु। आगच्छतां भवतां रथनेमयः स्थिराः सन्तु। अथ परोक्षः। रथा अश्वाश्चैषां स्थिराः सन्तु। सुसंस्कृताश्चाश्वप्रग्रहा भवन्तु॥ १२॥

अच्छावदातनागिराजरायैब्रह्मणस्पतिम् ।
अग्निंमित्रंनदर्शतम् ॥ १३ ॥

अच्छ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् । अग्निम् । मित्रम् । न । दर्शतम् ॥ १३ ॥

स्कन्दस्वामीयम् ।

अच्छ वद अच्छशब्द आप्तुमित्यस्यार्थे[1] । आत्मन एवायमन्तरात्मनः प्रैषः । हे अन्तरात्मन्! आप्तुं वद । कान् । प्रकरणान्मरुतः । केनाप्तुम् । तना । धननामैतत् । हविर्लक्षणेन धनेन । गिरा जरायै । गीरिति वाङ्नाम । जरायै । जरतेः स्तुतिकर्मणः । तृतीयायाश्च स्थाने चतुर्थी । वाचा स्तुतिलक्षणया । युष्मानहं हविषा स्तुत्या च व्याप्तवानित्येतन्मरुतो वदेत्यर्थः । अथवा । अच्छावदेत्यच्छ अभेः स्थाने । अभिवद स्तुहीत्यर्थः । तना । हेताविय तृतीया । धनेन हेतुना । धनलाभार्थमित्यर्थः । केन वा स्तवानि । उच्यते । गिरा जरायै । वाचा स्तुतिलक्षणया । कथमच्छा वदानि । उच्यते । ब्रह्मणस्पतिम् अग्निं मित्रं न । नशब्द उपमार्थीयस्त्रिभिरप्येतैः सम्बन्धयितव्यः । ब्रह्मणस्पतिमिव च अग्निमिव च मित्रमिव च । कीदृशं मित्रम् । दर्शतम् । दर्शनीयम् । अथवा दर्शतमिति मरुतां गणाभिधानं न मित्रस्य । गणाभिप्रायश्चैकवचनम् । अच्छावद दर्शनीयं मरुतां गणमिति ॥

वेङ्कटमाधवीयम् ।

अच्छावद । अभिवदत तया गिरा स्तोतुं ब्रह्मणस्पतिमग्निं मित्रमिव च दर्शनीयं मारुतं गणम् ॥ १३ ॥

मिमीहिश्लोकमास्येपर्जन्यइवततनः ।
गायगायत्रमुक्थ्यम् ॥ १४ ॥

मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रम् । उक्थ्यम् ॥ १४ ॥

---

१. 'मिच्छेत्य' क. पाठ. २. 'गु' ग. पाठः.

स्कन्दस्वामीयम् ।

मिमीहीत्यन्तरात्मनः[1] प्रैषः निर्मिमीष्व कुरु हे अन्तरात्मन्! । श्लोकम् । वाङ्नामैतत् । स्तुतिलक्षणं शब्दम् । आस्ये । तृतीयार्थे सप्तम्येषा । आस्येनात्मीयेन वदनेन । निर्माय च पर्जन्य इव ततनः । यथा पर्जन्यः स्वशब्दं विस्तारयति तद्वद् विस्तारय । विस्तारितेन च तेन गाय गायत्रम् । गायतिरर्चतिकर्मा । स्तुहि गायत्रं स्तुत्यमुक्थ्यं प्रशस्यम् । एकवचननिर्देशात् प्रकरणादुत्तरस्यामृचि दर्शनान्मारुतगणम् ॥ १४ ॥

वेङ्कटमाधवीयम् ।

मिमीहि श्लोकम् । निर्मिमीहि पूर्वं श्लोकमास्ये । अथ तं पर्जन्य इव वृष्टिं विस्तारय । गाय गायत्रं च सामोक्थाई स्तोतः ॥ १४ ॥

**वन्दस्वमारुतंगणंत्वेषंपनस्युमर्किणम् ।**

**अस्मेवृद्धाअसन्निह ॥ १५,१७ ॥**

**वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मे इति । वृद्धाः । असन् । इह ॥ १५ ॥**

स्कन्दस्वामीयम् ।

वन्दस्व मारुतं गणम् । त्वेषं दीप्तम् । पनस्युं स्तुतिकामिनमित्यर्थः । अथवा पनस्यतिरर्चतिकर्मा । स्तुत्यमित्यर्थः । अर्किणं स्तोतृप्रयुक्तैर्गुणैर्मन्त्रवन्तमन्नवन्तं वा । किं कारणम् । यस्माद् अस्मे अस्माकं स्वभूते वृद्धाः वीर्येण परिवृद्धाः मरुतः असन् नित्यं भवन्ति इह कर्माणि । यस्मादस्मदीये कर्मणि (अस्मत्कर्मणि ?) नित्यं मरुतः सन्निहिता भवन्ति, तस्माद् वन्दस्व मारुतं गणमिति समस्तार्थः । अथवा वन्दस्व मारुतं गणमित्यर्धर्च एव समासं वाक्यम् । तृतीयस्तु पाद आशीः, भिन्नमेव वाक्यम् । मरुतां प्रसादेनास्माकं परिवृद्धा असन् भवन्तु । काः । सामर्थ्यात् सम्पदः ॥ १५ ॥

वेङ्कटमाधवीयम् ।

वन्दस्व मारुतम् । स्तुहि मारुतं गणं दीप्तं स्तुतिकामं शस्त्रवन्तम् । अस्मासु भवन्तु प्रवृद्धा इह मरुतः ॥ १५ ॥

इति प्रथमस्य तृतीये सप्तदशो वर्गः ॥

---

1. 'त्यात्मन एवान्तरा' ग. पाठः.

प्रयदित्थापरावतःशोचिर्नमानमस्यथ ।

कस्यक्रत्वामरुतःकस्यवर्पसाकंयाथकंहधूतयः ॥ १ ॥

प्र । यत् । इत्था । परा॒ऽवतः । शोचिः । न । मानम् । अस्यथ । कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कम् । याथ । कम् । ह । धूतयः ॥ १ ॥

## स्कन्दस्वामीयम् ।

यत् ये मरुतः यूयम् । इत्था सत्यनामैतत् । सत्यमेव । परावतः दूरात् । शोचिर्न । शोचिर्दीप्तिरुच्यते । यथा अग्निरादित्यो वा सर्वतः स्वर्चींषि प्रास्यत्येवं मानं वृष्टिद्वारेण सर्वस्य निर्मातारं मेघं प्रास्यथ प्रकर्षेण सर्वत्र क्षिपथ । अथवा मानो गर्व उच्यते । शोचिरित्यपि प्रथमान्तं क्षेप्तृवचनम् । क्षिप्यमाणवचनम् । यथा अग्नेरादित्यस्य वा शोचिर्दीप्तिर्दूरात् तमांसि प्रास्यत्येवं यूयं शत्रूणां मानं गर्वं दूरात् प्रास्यथ क्षिपथ, नाशं गमयथेत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ते । कस्य क्रत्वा । हेताविय़ं तृतीया । कस्य यजमानस्य कर्मणा हेतुना । कस्य वा वर्पसा रूपेण । कं वा यजमानं प्रति । याथ गच्छथ । कम् । सुखनामैतत् । क्रियाविशेषणञ्चैतद् द्रष्टव्यम् । सुखमक्लेशेनेत्यर्थः । निपातो वा । कंशब्दः पदपूरणः । हे धूतयः! कम्पयितारः! शत्रूणाम् । यत् कर्म कुर्वन्तं यद्रूपं वा यं वा यजमानं प्रति यूयमक्लेशेन गच्छथ, तं मह्यं कथयत । सुखमहमपि तत्कर्मा तद्रूपः स एव च भवामीत्यागमनविलम्बनादुपालम्भोऽयम् ॥ १ ॥

## वेङ्कटमाधवीयम् ।

प्रयदित्था । प्रास्यथेत्थं मरुतो दूराद् यत् तेज इवात्मीयं शब्दं, तत् कस्य कर्मणा मरुतः । केन वा वेष्टिताः । कं च देशं यूयं याथ, कं वा तत्र पुरुषं हे कम्पयितारः! ॥ १ ॥

स्थिरावःसन्त्वायुधापराणुदेवीळूउतप्रतिष्कभे ।

युष्माकमस्तुतविषीपनीयसीमामर्त्यस्यमायिनः ॥ २ ॥

स्थिरा । वः । सन्तु । आयुधा । पराऽनुदे । वीळु । उत । प्रतिऽस्कभे । युष्माकम् । अस्तु । तविषी । पनीयसी । मा । मर्त्यस्य । मायिनः ॥ २ ॥

## स्कन्दस्वामीयम् ।

स्थिराण्यविचलानि[1] नित्यसन्निहितानि वः सन्त्वायुधा आयुधानि । किमर्थम् । पराणुदे । 'नुद प्रेरणे' । अस्मच्छत्रूणां प्रेरणाय स्वस्थानादपकालनाय । वीळु । दृढमभेद्यमेकचित्तमत्रोच्यते । एकचित्तं चास्त्वित्यर्थः । किं तत् । सामर्थ्यात् सेनालक्षणं बलम् । न च पराणुद एव केवलाय । किन्तर्हि । उत प्रतिष्कभे । 'ष्टभि ष्कभि प्रतिबन्धे' । प्रतिबन्धायापि शत्रूणाम् । एतदुक्तं भवति । सर्वस्यैव द्विविधा शत्रवः उच्छेद्या उच्छेदका वा । तत्र येऽस्माकमुच्छेद्याः शत्रवः, तेषां स्थानादपकालनाय, ये उच्छेदकास्तेषां प्रतिबन्धाय युष्माकमायुधानि नित्यं सन्निहितानि सन्तु । सेनालक्षणं चाभेद्यमस्त्विति । अथवा वीळू इति दीर्घत्वदर्शनादायुधानां च प्रकृतत्वात् समानाधिकरणप्रथमाबहुवचनान्तो वीळुशब्द इति व्याख्यातव्यम् । स्थिराणि चायुधानि वीळूनि चेति । अस्मच्छत्रूणामपकालनाय प्रतिबन्धाय च नित्यसन्निहितानि दृढानि च युस्माकमायुधानि भवन्त्वित्यर्थः । अथवा वीळू इत्यूकारस्य प्रगृह्यदर्शनाद् वीळुशब्दो द्विवचनान्तः । स्थिराणि च आयुधानि भवन्त्वस्मच्छत्रूणां पराणुदाय । किञ्च, वीळू उत वीळू चास्ताम् । कौ । द्विवचननिर्देशाद् युद्धोपकरणाविषुधी वा रथाश्वौ वा । किमर्थम् । प्रतिष्कभे प्रतिबन्धनायापनयनाय धारणा(ये? य वे)त्यर्थः । कस्य । सामर्थ्याद् रिपूणां वा युष्माकं वा रथस्थानाम् । पदकाराभिप्रायश्चैवं सति पर्येष्यः । किञ्च, युष्माकमस्तु तविषी पनीयसी मा । अस्त्वित्येतन्मेत्यनेन सम्बन्धयितव्यः । तत्सम्बन्धाच्च लुङर्थे लोट् द्रष्टव्यः । तविषीति बलनाम । पनीयसीति पनतेः स्तुत्यर्थस्य तृजन्तस्यातिशयप्रत्यये रूपम् । व्यत्ययेनात्र तृच् कर्मणि द्रष्टव्यः । युष्माकं स्वभूतं बलमतिशयेन स्तोतव्यम् । मा अस्तु मा भूत् । कस्य । मर्त्यस्य मायिनो मायावतः । युष्मद्बलमशठस्यैवातिशयेन स्तुत्यतां प्रतिपद्यतां, मा शठस्येत्यर्थः ॥ २ ॥

---

१. 'व्यचलितानि' क. ख. पाठः.

वेङ्कटमाधवीयम् ।

स्थिरा । स्थिराणि युष्माकं सन्त्वायुधानि शत्रूणां प्रेरणाय । अपि च दृढं च प्रतिष्कम्भितुं युष्माकमस्तु बलमतिशयेन स्तोतव्यम् । मा मायावतो मर्त्यस्य यजमानस्य ॥ २ ॥

**परा॑ह॒यत्स्थि॒रंह॒थनरो॑व॒र्तय॑था गु॒रु ।**

**वियाथनवनिनः॑पृथि॒व्याव्याशाः॒पर्व॑तानाम् ॥ ३ ॥**

**परा॑ । ह॒ । यत् । स्थि॒रम् । ह॒थ । नरः॑ । व॒र्तय॑थ । गु॒रु ।**

**वि । या॒थ॒न । व॒निनः॑ । पृ॒थि॒व्याः । वि । आशाः॑ । पर्व॑तानाम् ॥**

स्कन्दस्वामीयम् ।

परेत्युपसर्गः हथेत्याख्यातेन सम्बन्धयितव्यः । हशब्दः पदपूरणः । यत् स्थिरमविचलं स्वस्मात् प्रदेशाच्चालयितुमशक्यम् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तद् । यूयं पराहथ स्वप्रदेशस्थितं मुष्टिभिश्चूर्णयथ । हे नरो मनुष्याकारा मरुतः! । यत्तु स्वस्मात् प्रदेशाच्चालयितुमशक्यं तद् वर्तयथ प्रलोपयथेत्यर्थः । गुरु उर्वपि दुष्प्रलोपमपीत्यर्थः । किञ्च, वियाथन विगच्छथ । लङ्घयथेत्यर्थः । किम् । वनिनः वृक्षान् । कुतः । पृथिव्याः, पृथिवीतः । भूमितः उड्डीय वृक्षानपि लङ्घयथेत्यर्थः । न च पृथिवीत एव केवला(त् ? तः) । किन्तर्हि । व्याशाः । आशा इति दिङ्नाम । दिशोऽपि विगच्छथ पर्वतानां सम्बन्धिनीः । कः पुनः पर्वतानां दिग्भिः सम्बन्धः । दिक्षु पर्वता व्यवतिष्ठन्ते । अथवा पर्वतानामिति द्वितीयार्थे षष्ठी । दिशः पर्वतांश्च विगच्छथेति । ऊर्ध्वं तिर्यक् च लङ्घनसमर्थाः स्थेत्यर्थः । अथवा वियाथनेति यातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । विगमयथ वनिनः पृथिव्याः । भूमितो वृक्षानुत्खनयथेत्यर्थः । व्याशाः पर्वतानाम् । आशाशब्दः इच्छावचनः । पर्वत इत्यपि मेघनाम । अस्माभिर्वर्षितव्यमित्येवंरूपा आशा मेघानां विगमयथ नाशयथेत्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

परा ह । पराहथ यदा स्थिरं पर्वतादिकं, यदा वा नरः! गुरुभारमपि शिलादिकं तृणमिव चलयथ, तदा पृथिव्या वृक्षान्मध्येन गच्छथ । तथोपरि च पर्वतानां दिशो मध्येन गच्छथ विविञ्चन्तः ॥ ३ ॥

---

१. 'त्स्वस्मात्', २. 'न् विल' ख० पाठः.

नहिवःशत्रुर्विविदेअधिद्यविनभूम्यांरिशादसः ।
युष्माकमस्तुतविषीतनायुजारुद्रासोनूचिदाधृषे ॥ ४ ॥

नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः । युष्माकम् । अस्तु । तविषी । तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ ४ ॥

## स्कन्दस्वामीयम् ।

नहि वः शत्रुः शातयिता विविदे विद्यते । अधि द्यवि दिव उपरि । द्युलोक इत्यर्थः । नापि भूम्याम् । हे रिशादसः ! । रिशिर्हिंसार्थः । 'असु क्षेपणे' । रिशतोऽस्यन्तीति रिशादसः । हिंसितॄणां प्रतिहिंसितार इत्यर्थः । तेषां सम्बोधनं हे रिशादसः ! । किञ्च, युष्माकमस्तु तविषी तना युजा । तनेति धननाम । युष्मदीयहविर्लक्षणेन धनेन युक्तमस्मदीयं हविरुपभुङ्क्ता-मित्यर्थः । हे रुद्रासः ! । पितृशब्दोऽयं सोऽयमित्यभिसम्बन्धात् पुत्रेषु प्रयुक्तः । रुद्रपुत्रा इत्यर्थः । कुत एतत् । "रुद्रस्य ये मीह्ळुषः सन्ति पुत्रा" इत्यादिषु मरुतां रुद्रपुत्रत्वदर्शनात् । किमर्थम् । नूचिदाधृषे । नु इति क्षिप्र-नाम । चिच्छब्दः पदपूरणः । क्षिप्रमस्मच्छत्रूणां धर्षणायाभिभवाय वा । अथवा नूचिदाधृष इत्येतत् पूर्वानपेक्षं भिन्नं वाक्यम् । नूचिच्छब्दश्चात्र नशब्दस्यार्थे । "नूचित स भ्रेषते जनो न रेषत्" इति यथा । नाधृषे नाभि-भवाय । कः । सामर्थ्याद् यूयं, प्रकृतत्वाद् वा तविष्याः । युष्मदीया तविषी, यूयं युष्मदीयं वा बलं न कुतश्चिदभिभवं प्राप्नोतीत्यर्थः ॥ ४ ॥

## वेङ्कटमाधवीयम् ।

नहि वः । न हि वः शत्रुर्जायते[१] स्वर्गे नच भूम्यां रिशतामसितारः ! । युष्माकमस्तु बलं हविर्लक्षणेन धनेन सहायेन रुद्रपुत्राः ! क्षिप्रं शत्रूणामाधर्षणाय ॥ ४ ॥

प्रवेपयन्तिपर्वतान्विविञ्चन्तिवनस्पतीन् ।
प्रोआरतमरुतोदुर्मदाइवदेवासःसर्वयाविशा ॥ ५ ॥

---

१. 'ज्ञा' ग. पाठः.

प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति । वनस्पतीन् । प्रो इति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥

## स्कन्दस्वामीयम् ।

प्रवेपयन्ति कम्पयन्ति पर्वतान् मरुतः । विविञ्चन्ति । 'विचिर् पृथग्भावे' । पृथक् कुर्वन्ति उत्खनन्तीत्यर्थः । कान् । वनस्पतीन् । प्रत्यक्षकृतः परोऽर्धर्चो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । प्रो आरत । अर्तिर्गत्यर्थः । प्रागच्छत हे मरुतः! ! कथम् । दुर्मदा इव । यथा दुर्मत्ताः सन्तः प्रकर्षेण हुंकारयन्तः आगच्छन्ति, तद्वत् । देवास. हे देवाः! । मा च केवलाः । किन्तर्हि । सर्वया विशा । विट् इति मनुष्यनाम । सर्वया स्वपरिचारमनुष्यजात्या सह । सर्वैः परिचारकैः सहेत्यर्थः ॥ ५ ॥

## वेङ्कटमाधवीयम् ।

प्रवेपयन्ति । प्रकम्पयन्ति शिलोच्चयान् । पृथक् कुर्वन्ति वनस्पतीन् । इत्थं मधुमत्ता इव प्रगच्छथ देवाः! मरुतः! सर्वैरनुचरैः सह ॥ ५ ॥

इति प्रथमस्य तृतीये अष्टादशो वर्गः ॥

---

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥ ६ ॥

उपो इति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः । आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयन्त । मानुषाः ॥ ६ ॥

## स्कन्दस्वामीयम् ।

उपो इत्येष निरित्येतस्य स्थानेनाख्यातेन सम्बन्धयितव्यः । स्वरथेषु पृषतीः पृषद्वर्णा बडवाः । उपो अयुग्ध्वमिति । अस्मद्यज्ञागमनार्थं रथस्यैकस्य पृषतीः निरयुङ्ध्वम् । न च केवलाः । किन्तर्हि । प्रष्टिर्वहति रोहितः । चतुर्वर्गस्य रथस्यैकस्य एकस्यामेव धुरि यः पार्श्वे द्वितीयो नियुज्यते, स

प्रष्टिरित्युच्यते । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः प्रष्टिर्वहति रोहितः लोहितवर्णः तं च । किं पुनः कारणं यत्नेनोह्यामहे । उच्यते । यस्मात् आ वो यामाय । व इति षष्ठी । यामायेति यामशब्दो रथवचनः । "विभुर्वां याम" इति यथा । षष्ठ्यर्थे चतुर्थी । तच्छब्दश्रुतेश्च शब्दमिति वाक्यशेषः । युष्माकं स्वभूतस्य गच्छतो रथस्य शब्दम् । पृथिवी । चिच्छब्दः पदपूरणः । समस्ता पृथिवी । आ अश्रोत् मर्यादया शृणोति । अतस्तं वयमपि शुश्रुमह इत्यर्थः । अबीभयन्त बिभ्य (त ? ति) युष्मत्तः (आ)गमकुर्वन्तः अस्मद्विधा मानुषाः । (अथवा) आ वो यामायेति । व इति 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (१-४-४०) इत्येवं सम्प्रदानत्वात् सम्प्रदाने चतुर्थी । यान्त्यस्मिन् देवा इति यामो यज्ञः । द्वितीयार्थेऽत्र चतुर्थी । युष्मभ्यं यज्ञं समस्ता पृथिवी आ अश्रोत् आशृणोति प्रतिजानीते । यस्माद् युष्मान् यक्ष्यामीत्येतन्न कश्चिन्नाभ्युपगच्छतीत्यर्थः । अतश्चान्यत्र व्यापृता मरुतः कदाचिदस्मद्यज्ञं नागच्छेयुरपीत्येवमाशङ्किता युष्मद(ना)गमनाद् अबीभयन्त बिभ्यत्यस्मद्विधा मानुषाः । यस्मादन्यव्यापृतानां युष्माकं स्वयज्ञेऽनागमनाद् बिभेमि, तस्माद् यत्नेन ब्रवीमि न्ययुग्ध्वं पृषतीर्वडवाः प्रष्टिं च रोहितमिति समस्तार्थः ॥ ६ ॥

### वेङ्कटमाधवीयम् ।

उपो रथेषु । यूयं रथेषु पृषद्वर्णा अश्वा उपायुङ्ग्ध्वम् । प्रष्टिर्भूत्वा वहति रोहितवर्णोऽश्वस्तं चोपायुङ्ग्ध्वम् । आशृणोति भवतां गमनाय पृथिवी । किं मरुत आगच्छन्तीति भयेन बिभ्यति च मानुषाः ॥ ६ ॥

**आ वो॑ म॒क्षू तना॑य॒ कं रुद्रा॒ अवो॑ वृणीमहे ।**

**गन्ता॑ नू॒नं नोऽव॑सा॒ यथा॑ पु॒रेत्था कण्वा॑य बि॒भ्युषे॑ ॥ ७ ॥**

आ । व॒ः । म॒क्षु । तना॑य । कम् । रुद्राः॑ । अव॑ः । वृ॒णी॒म॒हे॒ । गन्त॑ । नू॒नम् । न॒ः । अव॑सा । यथा॑ । पु॒रा । इ॒त्था । कण्वा॑य बि॒भ्यु॑षे ॥ ७ ॥

### स्कन्दस्वामीयम् ।

वो युष्माकं स्वभूतं मक्षु क्षिप्रं प्रार्थयामह इत्यर्थः । तनाय । तनोत्यसाविति तनः पुत्रादिसन्तानः । तदर्थम् । अथवा तनेति धननाम । धनार्थम् ।

कं सुखं हे रुद्राः! रुद्रपुत्राः! मरुतः! अवः पालनम् आवृणीमहे प्रार्थयामहे। युष्माभिः पाल्यमानाः पुत्रादिसन्तानं धनं वा प्राप्स्याम इत्येवमर्थं युष्मदीयं पालनं क्षिप्रं प्रार्थयामह इत्यर्थः । अत एतद् ज्ञात्वा गन्त (आ) गच्छत । नूनमिति पदपूरणः । नः । 'गत्यर्थकर्मणि द्वितीया —' (२-३-१२) इत्येवमेषा कर्मणि चतुर्थी एकवचनस्य स्थाने बहुवचनम् । मह्यम् । अवसा । 'इत्थम्भूतलक्षणे' (२-३-२१) इत्येवमेषा तृतीया । पालनेन सम्बद्धाः । यथा (पुरा) पूर्वेषु कालेषु । इत्था अमुतोऽन्तरिक्षात् । कण्वाय बिभ्युषे आशङ्कितयुष्मदागमनभीताय । यथैव पुरा, तद्वत् इदानीमपि पालहस्ता मां कण्वमाशङ्कितयुष्मदागमनभीतं प्रत्यमुतोऽन्तरिक्षादागच्छतेत्यर्थः ॥ ७ ॥

### वेङ्कटमाधवीयम् ।

आ वो मक्षु । आवृणीमहे युष्माकं रुद्रपुत्राः । रक्षणं पुत्राय । तथा स्पति गच्छत सम्प्रत्यस्मान् रक्षणेन । यथा पुरान्येषामाह्वाने । एवं बिभ्युषे कण्वाय गच्छतेति ॥ ७ ॥

**युष्मेषितोमरुतोमर्त्येषितआयोनोअभ्वईषते ।**
**वितंयुयोतशवसाव्योजसावियुष्माकाभिरूतिभिः ॥ ८ ॥**

**युष्माऽइषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ ८ ॥**

### स्कन्दस्वामीयम् ।

हे मरुतः! (युष्मेषितः मर्त्येषितः) युष्मत्प्रेषितो मर्त्यप्रेषितो वा । यो नो अभ्वः । महन्नामैतत् । महान् । आ ईषते । ईषति फणतीति गतिकर्मसु पाठाद् गत्यर्थोऽयम् । आगच्छति । कः । सामर्थ्याद्धिंसिता । तं वियुयोत । यौतिः पृथग्भावार्थः । पृथक् कुरुत । तमस्मत्तोऽपनयतेत्यर्थः । केन । शवसा सेनालक्षणेन । वि तम् (ओजसा) युयोत । वि युष्माकाभिरूतिभिः यौष्माकीणैः पालनैश्च वियुयोत । किञ्चित् सेनालक्षणेन बलेन, किञ्चित् स्वशरीरबलेन, किञ्चित् पालनमात्रेणैवेत्यर्थः ॥ ८ ॥

### वेङ्कटमाधवीयम्।

युष्मेषितः। युष्माभिः प्रेषितो मरुतः! मर्त्यैर्वा प्रेषितो यो महानस्मानाहि-नस्ति, तं यूयं शवसास्मत्तः पृथक् कुरुत ओजसा च। तथा यौष्माकीणैः परिरक्षणै-श्चास्मानवतेति ॥ ८ ॥

**असामिहिप्रयज्यवःकण्वंददप्रचेतसः।**

**असामिभिर्मरुतआनऊतिभिर्गन्तावृष्टिंनविद्युतः ॥ ९ ॥**

असामि। हि। प्रऽयज्यवः। कण्वम्। दद। प्रऽचेतसः। असामिऽभिः। मरुतः। आ। नः। ऊतिऽभिः। गन्त। वृष्टिम्। न। विऽद्युतः ॥ ९ ॥

### स्कन्दस्वामीयम्।

सामि अर्धम्। न सामि असामि समग्रम्। किं तत्। सामर्थ्याद् धनम्। प्रयज्यवः प्रकर्षेण यष्टव्याः! मरुतः!। कण्वम्। चतुर्थ्यर्थे द्विती-यैषा। मह्यं कण्वाय। दद दत्त। हे प्रचेतसः! प्रवृद्धज्ञानाः!। किञ्च, असामिभिः समग्राभिः। हे मरुतः!। नः अस्मान्। ऊतिभिः पालनैः सम्बद्धाः। आगन्त आगच्छत। समग्रपालनहस्ताः अस्मान् प्रत्यागच्छते-त्यर्थः। कथम्। वृष्टिं न विद्युतः। यथा वृष्टिं मरुता व्याप्नुवत्यो विद्युत आगच्छन्ति, तद्वत् ॥ ९ ॥

### वेङ्कटमाधवीयम्।

असामि हि। प्रकर्षेण यष्टव्याः! प्रकृष्टज्ञानाः! कण्वं हि मामसाधारणं मनु-ष्येभ्यः पतिं हि दत्त। असाधारणैश्च पालनैरस्मानागच्छत वृष्टिमिव विद्युतः शीघ्रम् ॥ ९ ॥

**असाम्योजोबिभृथासुदानवोसामिधूतयःशवः।**

**ऋषिद्विषेमरुतःपरिमन्यवइषुंनसृजतद्विषम् ॥ १० ॥**

असामि। ओजः। बिभृथ। सुऽदानवः। असामि। धूतयः। शवः। ऋषिऽद्विषे। मरुतः। परिऽमन्यवे। इषुम्। न। सृजत। द्विषम् ॥ १० ॥

## स्कन्दस्वामीयम् ।

असामि ओजः शारीरं बलम् । बिभृथ धारयथ । हे सुदानवः! । दानुशब्दो दातृवचनो दानवचनो वा । शोभनदातारः! शोभनदानाः! वा । न च केवलं शारीरमेव बलम् । किं तर्हि । असामि । हे धूतयः! कम्पयितारः! शत्रूणाम् । शवः सेनालक्षणमपि बलम् । द्विविधेनापि बलेन उपेताः स्थेत्यर्थः । यत एवम्, अतो ब्रवीमि। ऋषिद्विषे म(ति ? त्)प्रभृतीनाम्। ऋषीणां द्वेष्ट्रे । हे मरुतः! । परिमन्यवे । मन्युरिति क्रोधनाम । परिगतो मन्युर्येन स परिमन्युः । तस्मै परिमन्यवे क्रुद्धायेत्यर्थः । अथवा मन्युर्मन्यतेर्दीप्तिकर्मणः । दीप्तिरत्रोच्यते । परिगतदीप्तये स्वदीप्त्या ऐश्वर्यादिकया दीप्त्यापीत्यर्थः । इषुं न । यथा कश्चित् कस्मैचिदिषुं क्रुद्धः सृजेत् , तद्वत् । सृजत विसृजत क्षिपत । द्विषं सर्वलोकद्वेष्टारम् । तमृषीणां द्वेष्टारं नित्यक्रुद्धम् ऐश्वर्यादिदीप्त्या वा दीप्तमपि सर्वलोकद्वेष्यं कुरुतेत्यर्थः ॥ १० ॥

## वेङ्कटमाधवीयम् ।

असाम्योजः । असाधारणं बलं बिभृथ शोभनदानाः । असाधारणं वेगं च कम्पयितारः! । कण्वं मां यो द्वेष्टि तस्मै परितो मन्यमानाय शरमिव द्वेषं विसृजतेति ॥ १० ॥

इति प्रथमस्य तृतीये एकोनविंशो वर्गः ॥

---

## अथ विंशो वर्गः ।

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १ ॥

उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे । उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ॥ १ ॥

स्कन्दस्वामीयम्।

सूक्तमुद्·ब्राह्मणस्पत्यम्। सूक्तमुत्तिष्ठेत्येतद् ब्रह्मणस्पतिदेवताकम् यास्त्वत्रान्या मरुदाद्या देवताः श्रूयन्ते, ब्रह्मणस्पतिना सह यौगिकत्वमात्रविज्ञानेन नैघण्टुक्यस्ता बोद्धव्याः। अस्मद्यज्ञमागन्तुम् उत्तिष्ठ हे ब्रह्मणस्पते!। देवयन्तः देवान् इच्छन्तो वयं त्वाम् ईमहे स्वयज्ञागमनं याचामहे। स्वयज्ञागमनमभ्यर्थयामहे इत्यर्थः। त्वया च सह उपप्रयन्तु मरुतोऽपि। सुदानवः शोभनदातारः शोभनदाना वा। त्वमपि हे इन्द्र! प्राशूः प्रकर्षेण क्षिप्रो भव। सचा सह ब्रह्मणस्पतिना॥ १॥

वेङ्कटमाधवीयम्।

उत्तिष्ठ। उत्तिष्ठ ब्रह्मणस्पते!। देवानिच्छन्तस्त्वां याचामहे। त्वत्सहाया मरुतश्चोपगच्छन्तु सुदानाः। इन्द्र! त्वं च क्षिप्रकारी भव सहायः॥ १॥

**त्वामिद्धिसहसस्पुत्रमर्त्यउपब्रूतेधनेहिते।**

**सुवीर्यंमरुतआस्वश्व्यंदधीतयोवआचके॥ २॥**

**त्वाम्। इत्। हि। सहसः। पुत्र। मर्त्यः। उपऽब्रूते। धने। हिते। सुऽवीर्यम्। मरुतः। आ। सुऽअश्व्यम्। दधीत। यः। वः। आऽचके॥ २॥**

स्कन्दस्वामीयम्।

त्वामपीन्द्र! मर्त्यः उपब्रूते। आत्मानमेव कण्वः परोक्षरूपेण प्रतिनिर्दिशति। अयं कण्वनामा मनुष्यः उपगम्य ब्रूते। अस्मदीयं यज्ञं ब्रह्मणस्पतिना सहागच्छेत्येतदभ्यर्थयत इत्यर्थः। धने हविराख्ये हिते निहिते। वेद्यां हविर्निधायेत्यर्थः। अथवा धने हिते इति निमित्त एषा सप्तमी। प्रयोजनस्य च निमित्तत्वेन विवक्षा। धने हिते निमित्तभूते। हितं धनं लब्धुमित्यर्थः। एतद् ज्ञात्वा यज्ञमागत्य सुवीर्यं मरुत आ स्वश्व्यम्। मरुत इति साहचर्यादनुक्रान्ताः ब्रह्मणस्पतिः मरुतः इन्द्रः सहसस्पुत्र इत्येते चत्वारोऽपि प्रतिनिर्दिश्यन्ते। आकारः समुच्चये, स्वश्व्यमित्यस्माच्च परो द्रष्टव्यः।

हे मरुत्प्रभृतयः! सुवीर्यं स्वश्व्यं च शोभनेन वीर्येणाश्वैश्चोपेतम्। दधीत। दधातिर्दानार्थः। लोट् मध्यमपुरुषबहुवचनं चैतद् द्रष्टव्यम्। दत्त। कस्मै। यो वः आचके कामयते। योऽस्मदादिर्युष्मान् प्रार्थयत इत्यर्थः। अथवा। दधीतेति दधातिर्धारण एव। लिङश्चैतदेकवचनम्। सुवीर्यं स्वश्व्यं च धनं दधीत धारयेत्, यो व आचक इति। नचादत्तस्य धारणं सम्भवतीत्यर्थाद् दानमेवानेन प्रार्थ्यत इति ॥ २ ॥

### वेङ्कटमाधवीयम्।

त्वामिद्धि। त्वामेव सहसः सूनो मर्त्य उपस्तौति। निहिते धने तद्रक्षार्थं मरुतः।[1] यो युष्मानाकामयते मर्त्यः स सुवीर्यं स्वश्व्यं च धारयेत्॥ २॥

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।**

**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥**

प्र। एतु। ब्रह्मणः। पतिः। प्र। देवी। एतु। सूनृता। अच्छ। वीरम्। नर्यम्। पङ्क्तिऽराधसम्। देवाः। यज्ञम्। नयन्तु। नः ॥ ३ ॥

### स्कन्दस्वामीयम्।

प्रैतु प्रकर्षेणागच्छतु ब्रह्मणस्पतिः। तेन च सह प्रदेव्येतु सूनृता वाक्। किमर्थम्। अच्छा आभि। (वीरम्।) वरिर्त्विक्कर्तृत्वात् वीरपुत्रफलत्वाद् वा वीरोऽत्र यज्ञ उच्यते। वीरकर्तृकं वीरपुत्रफलार्थं वा अस्मद्यज्ञम्। नर्यं नृभ्यो हितम्। पङ्क्तिराधसम्। 'राध साध संसिद्धौ'। पङ्क्तिभिः संसाध्यत इति पङ्क्तिराधाः सोमयागः। स हि चतसृभिः पङ्क्तिभिः संसाध्यते, हविष्पङ्क्त्या अक्षरपङ्क्त्या नाराशंसपङ्क्त्या सवनपङ्क्त्या च। धानाः करम्भः परिवापः पुरोडाशः पयस्येत्येषा हविष्पङ्क्तिः। सुमत्पद्वग्द इत्येषा अक्षरपङ्क्तिः। द्विनाराशंसं प्रातस्सवनं, द्विनाराशंसं माध्यन्दिनं सवनं, सकृन्नाराशंसं तृतीयसवनम् इत्येषा नाराशंसपङ्क्तिः। पशुरुपवसथे त्रीणि सवनानि पशुरनुबन्ध्या इत्येषा सवनपङ्क्तिः। एताश्च "यो वै यज्ञं हविष्पङ्क्तिं वेद" इत्युपक्रम्य ऐतरेय-

---

1. 'तस्य यो' घ. पाठः

ब्राह्मणे दर्शिताः । एताभिः साध्यमानत्वात् सोमयागः पङ्क्तिराधाः । तं पङ्क्तिराधसम् । ब्रह्मणस्पतिप्रसादाद् अन्येऽपि देवाः आत्मसमीपं यज्ञं नयन्तु नः अस्माकं स्वभूतम् । अन्येऽपि यज्ञमाप्नुवन्त्वित्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

प्रैतु । प्रगच्छतु ब्रह्मणस्पतिः । प्रैतु देवी वाग् । अभिनयन्त्वस्माकं बलयुक्तं नृभ्यो हितं हविष्पङ्क्त्यादिभिर्ब्राह्मणविहिताभिः पङ्क्तिभिः समृद्धं यज्ञं देवाः ॥ ३ ॥

**योवाघतेददातिसूनरंवसुसधत्तेअक्षितिश्रवः ।**

**तस्माइळांसुवीरामायजामहेसुप्रतूर्तिमनेहसम् ॥ ४ ॥**

यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः । तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे । सुऽप्रतूर्तिम् । अनेहसम् ॥ ४ ॥

स्कन्दस्वामीयम् ।

वाघत इति ऋत्विङ्नाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः यजमाने वर्तते । यो देवः ऋत्विग्वते यजमानाय । ददाति सूनरं शोभनैर्नरैरुपेतं वसु । स धत्ते धारयति । अक्षिति अक्षीणम् । श्रवः कीर्त्तिम् । कीर्त्तिमान् भवतीत्यर्थः । वयमपि तस्मा एव । इळां हविर्लक्षणमन्नम् । सुवीराम् । शोभनाः वीराः कर्तारो यस्यास्तां सुवीराम् । शोभनैः ऋत्विग्भिरुपकल्पितामित्यर्थः । आयजामहे दद्मः । सुप्रतूर्तिम् । तुर्वतिर्हिंसार्थः । सुष्ठु प्रतूर्य्यन्ते शत्रवो यया तां सुप्रतूर्तिम् । देवा हि हविरुपभोगाद् वीर्यमाप्नुवन्ति । तेन च वीर्येण शत्रून् घ्नन्ति । अत एवमुच्यते सुप्रतूर्तिमिति । अनेहसम् अपापाम् । एतद् ज्ञात्वा ब्रह्मणस्पते! कीर्त्त्यर्थं हविरर्थं च धनमस्माकं देहीत्यर्थः ॥ ४ ।

यो वाघते । य ऋत्विजे ददाति शोभननरोपेतं शोभननयनं वा धनं, धारयत्यक्षीणमन्नम् । वयं च तस्मै मानवीमिळां सुपुत्रामायजामहे शोभनप्रतरणामुपद्रवरहिताम् ॥ ४ ॥

**प्रनूनंब्रह्मणस्पतिर्मन्त्रंवदत्युक्थ्यम् ।**

**यस्मिन्निन्द्रोवरुणोमित्रोअर्यमादेवाओकांसिचक्रिरे**

[ ॥ ५ ॥

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् । यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥ ५ ॥

## स्कन्दस्वामीयम् ।

नूनमिति पदपूरणः । ब्रह्मणस्पतिः स्तुतिलक्षणं मन्त्रं वदति । वदति-रत्र सामर्थ्यादन्तर्णीतण्यर्थः । प्रवादयति । सर्वस्तोतृभिरुच्चारयतीत्यर्थः । उक्थ्यं प्रशस्यम् । कीदृशो मन्त्रः । उच्यते । यस्मिन्मन्त्रे इन्द्रो वरुणो मित्रो अर्यमा अन्ये च मरुत्प्रभृतयो देवता नैघण्टुकवृत्त्या ओकांसि स्थानानि चक्रिरे । यत्र इन्द्रादयोऽपि नैघण्टुकवृत्त्या स्थिता इत्यर्थः ॥ ५ ॥

## वेङ्कटमाधवीयम् ।

प्रनूनम् । प्रवदतीदानीं ब्रह्मणस्पतिर्मन्त्रं प्रशस्तम् । यस्मिन् मन्त्रे इन्द्रा-दयः स्थानानि चक्रिरे श्रवणार्थं, यं मन्त्रमुपासत इति ॥ ५ ॥

इति प्रथमस्य तृतीये विंशो वर्गः ॥

यमीदृशं ब्रह्मणस्पतिरन्यैः स्तोतृभिः प्रवादयति वयमपि —

तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥ ६ ॥

तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् । इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥

## स्कन्दस्वामीयम् ।

इच्छब्द एवार्थे । तमेव वोचेम उच्चारयेमेत्याशास्महे । विदथेषु यज्ञेष्वात्मीयेषु । शम्भुवं सुखस्य भावयितारं स्तुतिलक्षणं मन्त्रम् । हे ब्रह्मण-स्पतिसहचारिणो मरुत्प्रभृतयो देवाः! अनेहसमपापम् । इमां च स्तुतिलक्षणां वाचं प्रतिहर्यथ । हर्यतिः कान्तिकर्मा । ब्रह्मणस्पतिना सह कामयध्वम् । हे

नरो मनुष्याकाराः! किञ्च, विश्वेद् वामा वः । इच्छब्दः पदपूरणः । सर्वाणि वननीयानि धनानि वः युष्माकं स्वभूतेन प्रसादेन । अश्नवत् । व्यत्ययेनायमुत्तमस्य स्थाने प्रथमपुरुषः । अश्नुयां प्राप्नुयाम् ॥ ६ ॥

वेङ्कटमाधवीयम् ।

तमिद्वोचेम । तमेव वोचेम वयं यज्ञेषु सुखस्य भावयितारं मन्त्रं देवाः! अपापम् । तां चेमां वाचं देवा नरो यूयं कामयध्वम् : अयं च स्तोता युष्माकं स्वभूतानि सर्वाणि धनान्यश्नोतु ॥ ६ ॥

कोदेवयन्तमश्नवज्जनंकोवृक्तबर्हिषम् ।
प्रप्रदाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयंदधे ॥७॥

कः । देवऽयन्तम् । अश्नवत् । जनम् । कः । वृक्तऽबर्हिषम् । प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अन्तःऽवावत् । क्षयम् । दधे ॥ ७ ॥

स्कन्दस्वामीयम् ।

क इति सामर्थ्याच्छत्रोर्निर्देशः । कः शत्रुः । देवयन्तं ब्रह्मणस्पतिप्रभृतीन् देवान् यष्टुमिच्छन्तम् । अश्नवत् व्याप्नोति । जनं मनुष्यम् । न कश्चिदपि व्याप्तुं शक्नोतीत्यर्थः । को वृक्तबर्हिषम् आस्तीर्णबर्हिष्कम् । प्रप्र दाश्वान् पस्त्याभिरस्थित । प्रप्रेति । 'प्रसमुपोदः पादपूरणे' (८-१-६) इत्येवं द्विर्वचनम् । अस्थितेत्येतेन चाख्यातेन सम्बध्यते अयमुपसर्गः । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः दाश्वान् यजमानः । पस्त्याभिः । पस्त्यमिति गृहनाम । अत्र तु तात्स्थ्याद् देवाः, तत्प्रतिपादनादाहुतयः पस्त्या उच्यन्ते । इत्थंभूतलक्षणे चैषा तृतीया । आहुतिभिः सम्बद्धो गृहीताहुतिक इत्यर्थः । प्रास्थित प्रतिष्ठते[२] । होमार्थमाहवनीयं प्रति गच्छतीत्यर्थः । सः अन्तर्वावत् । वातेर्गत्यर्थस्य यङ्लुगन्तस्य शतृप्रत्यये रूपमेतत् । अन्तरत्यर्थं गतं लीनमप्रकाशं क्षयं दधे धारयति । सर्वलोकप्रकाशं महान्तं परिक्षयं न प्राप्नोतीत्यर्थः ॥ ७ ॥

---

१. 'न वा अ' ग. घ. पाठः. २. 'प्रविष्ठते । हो' क. ख. पाठः.

वेङ्कटमाधवीयम् ।

को देवयन्तम् । को यजमानमश्नोते जनः[1] । को वा छिन्नबर्हिषम् । प्रास्थित यजमानो विद्भिर्ऋत्विग्भि । तेषां मध्ये ब्रह्मणस्पतेरागच्छन् निवासं करोतीति पूर्वार्धस्योत्तरम् ॥ ७ ॥

**उपं क्षत्रं पृञ्चीत हन्ति राजंभिर्भये चित्सुक्षितिं दधे ।**

**नास्यं वर्ता न तंरुता महाधने नार्भे अस्ति वज्रिणः ॥ ८ ॥**

**उपं । क्षत्रम् । पृञ्चीत । हन्तिं । राजंऽभिः । भये । चित् । सुऽक्षितिम् । दधे । न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥ ८ ॥**

स्कन्दस्वामीयम् ।

क्षत्रमिति धननाम । धनम् । उपपृञ्चीत आत्मना सम्पर्कं नयति । धनं च लभत इत्यर्थः । हन्ति च शत्रून् । राजभिर्दीप्तैः ब्रह्मणस्पतिप्रभृतिभिः । तृतीयानिर्देशादनुगृहीत इति शेषः । अथवा हनिरत्रान्तर्णीतण्यर्थः । घातयति शत्रून् दीप्तैर्ब्रह्मणस्पतिप्रभृतिभिः । भये चित् भयहे(तुः? तौ) । सुक्षितिं दधे शोभनमप्रच्युतिरूपं निवासं दधे धारयति । भयकालेऽपि स्वस्थानान्न प्रच्यवत इत्यर्थः । किञ्च, नास्य वर्ता वर्तयिता । नापि तरुता हिंसयिता । नापि महाधने । सङ्ग्रामनामैतत् । महति सङ्ग्रामे । नाप्यर्भे अल्पे । अस्ति भवति । वज्रिणः आयुधवतः सतः । नैनं कश्चित् स्वस्मात् स्थानादपकाकयति, नाप्यल्पे महति वा सङ्ग्रामे गृहीतायुधं हिनस्तीत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

उपक्षत्रम् । ब्रह्मणस्पतिर्धनं स्तोतॄणामुपपृञ्चति । भयमपि वरुणादिभिः सहागत्य हन्ति । तथा भये सति शोभननिवासं गृहं प्रयच्छति । ब्रह्मणस्पतेरस्यायुधवतो महत्यल्पे वा सङ्ग्रामे नास्त्यभिगन्ता, न च तारकः ॥ ८ ॥

इति प्रथमस्य तृतीये एकविंशो वर्गः ॥

---

1. 'नः' म. पाठः.

यंरक्षन्तिप्रचेतसोवरुणोमित्रोअर्यमा ।
नूचित्सदभ्यतेजनः ॥ १ ॥

यम् । रक्षन्ति । प्रऽचेतसः । वरुणः । मित्रः । अर्यमा । नु । चित् । सः । दभ्यते । जनः ॥ १ ॥

## स्कन्दस्वामीयम् ।

त्रयस्तृचा वरुणार्यममित्राणाम् । यं रक्षन्तीत्येते त्रयस्तृचा वरुणार्यममित्राणां वेदितव्याः, वरुणादिदैवत्या इत्यर्थः । मध्य आदित्यदेवतः । एतेषां यो मध्यमस्तृचः द्वितीयः, स आदित्यदेवतः, न वरुणादिदेवतः । यं रक्षन्ति प्रचेतसः प्रकृष्टज्ञानाः वरुणो मित्रो अर्यमा । नूचित् स दभ्यते जनः । नूचिदित्ययं सामर्थ्यादत्र नशब्दस्यार्थे । दभ्नोतिर्वधकर्मा । न स हन्यते केनचित् जनः मनुष्यः ॥ १ ॥

## वेङ्कटमाधवीयम् ।

यं रक्षन्ति । यं वरुणादयः प्रचेतसो रक्षन्ति क्षिप्रमेव, सः जनः शत्रून् हिनस्ति हिंस्यते वा नाचित्तृभिः ॥ १ ॥

यंबाहुतेवपिप्रतिपान्तिमर्त्यंरिषः ।
अरिष्टःसर्वएधते ॥ २ ॥

यम् । बाहुताऽइव । पिप्रति । पान्ति । मर्त्यम् । रिषः । अरिष्टः । सर्वः । एधते ॥ २ ॥

## स्कन्दस्वामीयम् ।

यं बाहुतेव । बाहुतेति तृतीयाद्विवचनस्यायं छान्दसस्तादेशः । यं बाहुभ्यामिव । पिप्रति । 'पॄ पालनपूरणयोः' । वरुणादयः पूरयन्ति । यथा कश्चिद् भक्तं बाहुभ्यां पांसून् संहरन् पूरयेत्, एवं यमन्नेन धनेन च पूरयन्तीत्यर्थः । पान्ति रक्षन्ति मर्त्यं रिषः हिंसितुः सकाशात् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः । अरिष्टः शत्रुभिरहिंसितः सर्व एधते वर्धते सर्वबुद्धिभिः ॥ २ ॥

वेङ्कटमाधवार्यम् ।

यं बाहुतेव । यं धनादीनां बाहुतेव वरुणादयः पूरयन्ति, रक्षन्ति च मर्त्यं शत्रोः स सर्वोऽहिंसितो वर्धते ॥ २ ॥

**विदुर्गाविद्विषःपुरोघ्नन्तिराजानएषाम् ।**
**नयन्तिदुरितातिरः ॥ ३ ॥**

**वि । दुःऽगा । वि । द्विषः । पुरः । घ्नन्ति । राजानः । एषाम् । नयन्ति । दुःऽइता । तिरः ॥ ३ ॥**

स्कन्दस्वामीयम् ।

वि दुर्गा । वीत्ययं (विविधमित्यर्थे ।) विविधं (दुर्गा) घ्नन्ति । वि द्विषः विविधं घ्नन्ति द्वेष्टॄन् । पुरो नगराणि च विविधं घ्नन्ति । राजानः दीप्ता वरुणादयः । एषां द्विषां स्वभूताः पुर इति । नयन्ति । शुद्धोऽप्ययं नयतिः सोपसर्गार्थे द्रष्टव्यः । अपनयन्ति । दुरिता पापानि स्तोतॄणां तिरः । तिरः सत इति प्राप्तस्य नामनी । प्राप्तान्युत्पन्नानि सन्तीत्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

वि दुर्गा । अमी वरुणादयो यान् परिरक्षन्ति[1], एषां दुर्गाणि शत्रून् शत्रुपुराणि च विघ्नन्ति, दुरितानि च[2] तिरो नयन्ति ॥ ३ ॥

**सुगःपन्थाअनृक्षरआदित्यासऋतंयते ।**
**नात्रावखादोअस्तिवः ॥ ४ ॥**

**सुऽगः । पन्थाः । अनृक्षरः । आदित्यासः । ऋतम् । यते । न । अत्र । अवऽखादः । अस्ति । वः ॥ ४ ॥**

स्कन्दस्वामीयम् ।

सुखं गम्यते येन स सुगः पन्थाः । अनृक्षरः, ऋक्षराः कण्टकाः तद्वर्जितः । हे आदित्यासः। ऋतं यते । षष्ठ्यर्थ एषा चतुर्थी । यज्ञं

---

१. 'ब', २. 'परितो न' ग. पाठः. ३. 'जमानं ग' क. ख. पाठः.

गच्छतः । एतज्ज्ञात्वागच्छतेत्यर्थः । नात्रावखादो अस्ति वः । अत्रेति यज्ञः प्रतिनिर्दिश्यते, न पन्थाः । अन्वादेशे सत्यनुदात्तत्वप्रसङ्गात् । अवखाद इति खादिः सामर्थ्याद्धिंसार्थः । न चात्रास्मद्यज्ञे कश्चिद्धिंसितास्ति युष्माकमागतानां सतामित्यर्थः । अथ त्वत्रेति प्रकृतत्वात् पन्थाः प्रतिनिर्दिश्यते, ततोऽवखादो गर्त उच्यते । गर्तोऽप्यत्र पथि नास्ति युष्माकं, यत्रागच्छन्तो यूयं प्रस्खलिष्यथ । एतज्ज्ञात्वागच्छतेत्यर्थः ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

सुगः पन्थाः । शोभनगमनः पन्थाः आदित्याः ! यज्ञं गच्छते कण्टकवर्जितोऽस्तु । अस्मिन् भवतामवखादो नास्ति । चरुपुरोडाशादिकं सर्वमेव भवतां भक्ष्यं, न किञ्चित् त्याज्यमिति ॥ ४ ॥

**यंयज्ञंनयथानरआदित्याऋजुनापथा ।**

**प्रवःसधीतयेनशत् ॥ ५ ॥**

यम् । यज्ञम् । नयथ । नरः । आदित्याः । ऋजुना । पथा । प्र । वः । सः । धीतये । नशत् ॥ ५ ॥

### स्कन्दस्वामीयम् ।

यं यज्ञं नयथ आत्मसमीपं प्रापयथ । प्राप्त्यर्थो वा सामर्थ्यान्नयतिः । प्राप्नुथ । हे नरो मनुष्याकाराः! आदित्याः ! ऋजुना पथा शीघ्रमित्यर्थम् । प्र वः स धीतये नशत् । नशदिति व्याप्तिकर्मा । प्रकर्षेण युष्मान् स व्याप्नोति धीतये यजमानस्य प्रज्ञायै । युष्मत्प्रसादेन प्रज्ञावृद्ध्यर्थमित्यर्थः ॥ ५ ॥

### वेङ्कटमाधवीयम् ।

यं यज्ञम् । यं मनुष्यं यज्ञं नयथ नर आदित्याः ! ऋजुना पथा प्रव्याप्नोतु स भवतां कर्मणे ॥ ५ ॥

इति प्रथमस्य तृतीये द्वाविंशो वर्गः ॥

---

**सरत्नंमर्त्योवसुविश्वंतोकमुतत्मना।**
**अच्छागच्छत्यस्तृतः॥ ६॥**

सः। रत्नम्। मर्त्यः। वसु। विश्वम्। तोकम्। उत। त्मना। अच्छ। गच्छति। अस्तृतः॥ ६॥

## स्कन्दस्वामीयम्।

तच्छब्दश्रुतेर्योग्यार्थसम्बद्धो यच्छब्दोऽध्याहर्तव्यः। यो युष्मान् स्तौति यजते च, सः रत्नं रमणीयं मर्त्यो वसु धनं विश्वं बहु तोकमुत अपत्यञ्च त्मना आत्मनैव अच्छागच्छति। अच्छाभेरर्थे। अभिगच्छति। अस्तृतः अहिंसितः शत्रुभिः॥ ६॥

## वेङ्कटमाधवीयम्।

स रत्नम्। यो भवतां कर्मण्युद्युक्तः, स रत्नं मर्त्यो वासयितृ व्याप्तं पुत्रं चात्मनैवाभिगच्छत्यहिंसितः॥ ६॥

**कथाराधामसखायःस्तोमंमित्रस्यार्यम्णः।**
**महिप्सरोवरुणस्य॥ ७॥**

कथा। राधाम। सखायः। स्तोमम्। मित्रस्य। अर्यम्णः। महि। प्सरः। वरुणस्य॥ ७॥

## स्कन्दस्वामीयम्।

कथा केन प्रकारेण। राधाम। 'राध साध संसिद्धौ'। सामर्थ्याच्चान्तर्णीतण्यर्थः। संसाधयेम। हे सखायः! ऋत्विजः! मत्पुत्रादयो वा। स्तोमं मित्रस्यार्यम्णः वरुणस्य। कीदृशम्। महि महान्तम्। प्सरः। रूपनामैतत्। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः। रूपवन्तमत्यन्तशोभनमित्यर्थः॥ ७॥

## वेङ्कटमाधवीयम्।

कथा राधाम। कथं राधयामः सखायः! स्तोमं मित्रस्यार्यम्णश्च। कथं वा महद् रूपं वरुणस्य स्तुमः॥ ७॥

मावोघ्नन्तंमाशपन्तंप्रतिवोचेदेवयन्तम्।
सुम्नैरिद्वआविवासे ॥ ८ ॥

मा। वः। घ्नन्तम्। मा। शपन्तम्। प्रति वोचे। देवऽयन्तम्। सुम्नैः। इत्। वः। आ। विवासे ॥ ८ ॥

स्कन्दस्वामीयम्।

मा वो युष्माकं स्वभूतं घ्नन्तमपि वा मा[1] शपन्तम्। 'शप आक्रोशे'। आक्रोशन्तमपि। प्रति वोचे प्रतिवोचमित्याशासे। देवयन्तं देवानिच्छन्तं यष्टारमित्यर्थः। एतदुक्तं भवति—एवमहमत्यन्तं युष्मद्भक्तः, येन युष्माकं स्वभूतं यष्टारमपि घ्नन्तमप्याक्रोशन्तमपि मा प्रतिबधिषं मा च प्रत्याक्रुक्षमित्येतदाशास इति। किञ्च, सुम्नैरित्। सुम्नमिति सुखनाम। इच्छब्दः पदपूरणः। सुखैः परिचरणैः। वः युष्मान्। आविवासे परिचरेयमित्याशासे, परिचरामि वः ॥ ८ ॥

वेङ्कटमाधवीयम्।

मा वो घ्नन्तम्। यो युष्मान् देवान् कामयमानो भवति, तं मा घ्नन्तं शपन्तं वा नाहं प्रतिहन्मि न च प्रतिशपामि, सुखान्युद्दिश्य युष्मान् परिचराम्येव ॥ ८ ॥

किञ्च —

चतुरश्चिद्ददमानाद्बिभीयादानिधातोः।
नदुरुक्तायस्पृहयेत् ॥ ९ ॥

चतुरः। चित्। ददमानात्। बिभीयात्। आ। निऽधातोः। न। दुःऽउक्ताय। स्पृहयेत्।

स्कन्दस्वामीयम्।

चतुर इति सङ्ख्यापदं सामर्थ्यादक्षविषयं द्रष्टव्यम्। चिच्छब्द उपमायाम्। ददमानादिति ददातिर्धारयतिकर्मा। आ निधातोरित्येतदप्युपमानेन

---

[1] 'स्मद्दे दे' ख. पाठः.

सम्बध्यते, नोपमेयेन । यथा चतुरोऽक्षान् ददमानाद् धारयतः कितवाद् आनिधातोः आनिधानात् तेषामक्षाणां प्रतिकितवो बिभेति, तदयं पातयिष्यति येन मां जेष्यतीति, एवं युष्माकं वरुणादीनां प्रसादेन मादृशः सर्वः स्तोता बिभीयादित्याशासे । कुतो बिभीयात् । दुरुक्तात् । कुत एतत् । उत्तरस्मिन् पादे दुरुक्तस्पृहाप्रतिषेधात् । न दुरुक्ताय स्पृहयेत् । नशब्दोऽत्र माशब्दस्यार्थे । दुरुक्तमप्रियम् । स्पृहा अभिलाषः । माप्रियमभिलाषीत् कश्चिदप्यप्रियं वोचदित्यर्थः ॥ ९ ॥

## वेङ्कटमाधवीयम् ।

प्रसङ्गाद् दुरुक्तनिन्दां करोति – चतुरश्चिदिति । चतुरश्चिदक्षान् धारयतः प्रतिकितवात् कितवो यथा बिभीयादानिधानात्, किमयं चतुरोऽक्षान् पातयति जयायान्यूनानिति । इहाक्षेषु निहितेषु चतुरश्चतुरस्तान् विभजन्ति । तत्र यदा विभक्तेभ्योऽधिकास्त्रयो भवन्ति द्वावेको वा, न तदा जयो भवति । यदा चत्वारो भवन्ति तदा जयः । तस्मात् कितवाद् यथा बिभीयादेवं दुरुक्ताय बिभीयात्, न दुरुक्ताय स्पृहयेदिति ॥ ९ ॥

इति प्रथमस्य तृतीये त्रयोविंशो वर्गः ॥

---

**संपू॑षन्न॑ध्व॑नस्ति॒र॒व्यंहो॑विमुचोनपात् ।**
**सक्ष्वा॑देव॒प्रणस्पु॒रः ॥ १ ॥**

सम् । पूषन् । अध्वनः । ति॒र । वि॒ । अंहः । विऽमुचः । नपात् । सक्ष्व । दे॒व । प्र । नः । पुरः ॥ १ ॥

## स्कन्दस्वामीयम् ।

पौष्णमेतत् सूक्तम् । महान्तमध्वानमेष्यतः प्रतिभयं वा जपेऽस्य विनियोगः । हे पूषन्! अध्वनो मार्गात् संतिर । तिरतिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । सन्तारयास्मान् । व्यंहः । वीत्युपसर्गश्रुतेस्तिर इत्याख्यातमनुषक्तव्यम् । वितिर अंहः । पापं च विनाशय पापं चापगमयेत्यर्थः । हे विमुचो नपात् ! । संहारकाले सर्वमिदं ग्रसित्वा पुनः सृष्टिकाले विमुञ्चतीति ी(मुः ? मुक्) प्रजापतिः तस्य पौत्रः । कथं पुनः पूषा प्रजापतेः पौत्रः । अद्भ्यः पूष्णः पञ्चप्रजापतित उत्पत्तिश्रुतिभूत्पत्तिश्रुतेरपत्यमात्रनाम नपाच्छब्दः । प्रजापतेरपत्यम् । किञ्च

सक्ष्वा देव प्र। सक्ष्वेति सक्षतेः सचतेर्वा गतिकर्मणो रूपम्। प्रसक्ष्व प्रगच्छ देव। नः अस्माकम्। पुरोऽग्रतः। महति प्रतिभयेऽस्मिन् पथि अग्रतोगाम्यस्माकं भवेत्यर्थः॥ १॥

### वेङ्कटमाधवीयम्।

सं पूषन्। पूषन्! दुर्गान्मार्गात् सन्तारय, पापं च विनाशय, मेघादापो जायन्ते, अन्नयः पृथिवीति विमुचो नपात् तदधिपतिः पूषा। प्रसक्तो भव जिगमिषूणामस्माकमग्रतः॥ १॥

**योनःपूषन्नघोवृकोदुःशेवआदिदेशति।**
**अपस्मतंपथोजहि॥ २॥**

यः। नः। पूषन्। अघः। वृकः। दुःऽशेवः। आऽदिदेशति। अप। स्म। तम्। पथः। जहि॥ २॥

### स्कन्दस्वामीयम्।

योऽस्मान् हे पूषन्! अघः पापः वृकः। 'वृक वृक आदाने'। स्तेननामैतत्। परस्वादानपरश्चोरः। दुःशेवः कुत्सितसुखः। अन्यायोपात्तेन हि धनेन यत् सुखं जन्यते, कुत्सितं तत्। आदिदेशति सहायभूतेभ्यश्चोरेभ्यः। गच्छतः कथयतीत्यर्थः। अप स्म तं पथो जहि। हन्तिरत्र गत्यर्थः। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। अपजहि अपगमय तं पथो मार्गात्। स्मेति पदपूरणः॥ २॥

### वेङ्कटमाधवीयम्।

यो नः। योऽस्माकं पूषन्नाहन्ता स्तेनो दुस्सुख इहागन्तव्यमिति वदति, पथोऽपजहीति। अस्या उत्तरा भूयसे निर्वचनाय॥ २॥

**अपत्यंपरिपन्थिनंमुषीवाणंहुरश्चितम्।**
**दूरमधिस्रुतेरज॥ ३॥**

अप । त्यम् । परिऽपन्थिनम् । मुषीवाणम् । हुरःऽचितम् ।

दूरम् । अधि । स्रुतेः । अज ॥ ३ ॥

## स्कन्दस्वामीयम् ।

अपेत्युपसर्गः अन्तेनाजेत्येतेनाख्यातेन सम्बन्धयितव्यः । यः पूर्वस्यामृच्युक्तः तं परिपन्थिनं गमनप्रतिबन्धकम् । मुषीवाणम् । नेदं स्तेननाम हुरश्चितमित्यनेन पौनरुक्त्यप्रसङ्गात् । किन्तर्हि, क्रियाशब्दोऽयम् । मोषितारम् । हुरश्चितम् । स्तेननामैतत् । चोरम् । दूरमधि स्रुतेः । अधिशब्दः 'अधिपरी अनर्थकौ' (१-४-९३) इति कर्मप्रवचनीयः पदपूरणः । स्रूयते गम्यतेऽनयेति स्रुतिः पन्थाः । दूरमस्मात् पथः । अजतिर्गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थः । अपाज अपगमय ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

अपेति । अपगमय तं गमनप्रतिबन्धकरं परोक्षं हर्तारं प्रत्यक्षेण च हर(त?न्तम्) आहृत्य च धनानां चेतारं मार्गादधि दूरमिति ॥ ३ ॥

त्वंतस्यंद्वयाविनोघशंसस्यकस्यंचित ।

पदाभितिष्ठतपुषिम् ॥ ४ ॥

त्वम् । तस्य । द्वयाविनः । अघऽशंसस्य । कस्य । चित् ।

पदा । अभि । तिष्ठ । तपुषिम् ॥ ४ ॥

## स्कन्दस्वामीयम् ।

त्वं तस्य द्वयाविनः । द्वयमस्यास्ति, इह च राजभयं परत्र चापुण्यं स द्वयावी, तस्य द्वयाविनः । अघशंसस्य । स्तेननामैतत् । चोरस्य कस्यापि स्वभूतस्य । अथवा कमिति सुखनाम । सुखस्यापि, त्वां परिचरतोऽपीत्यर्थः । पदा पदेन अभितिष्ठ आक्रम । तपुषिं तापयित्रीं दुःखयित्रीम् । काम् । सामर्थ्यादिषुं शक्तिं वा । क्रोधनाम वा तपुषिशब्दः । अस्मद्विषयं क्रोधम् ॥ ४ ॥

वेङ्कटमाधवीयम् ।

स्वं तस्य । प्रत्यक्षपरोक्षहरण[illegible] [illegible] पादेनाभितिष्ठ बलम् ॥ ४ ॥

आतत्तेदस्रमन्तुमःपूषन्नवोवृणीमहे ।

येनपितॄनचोदयः ॥ ५ ॥

आ । तत् । ते । दस्र । मन्तुऽमः । पूषन् । अवः । वृणीमहे ।

येन । पितॄन् । अचोदयः ॥ ५ ॥

स्कन्दस्वामीयम् ।

आ तत्ते दस्र मन्तुमः । तत् तव स्वभूतं हे दस्र ! नमसां चोराणां वोपक्षयितः ! दर्शनीय ! वा । मन्तुमः ! मन्तुर्मननं, तद्वन् ! । पूषन् ! अवः पालनम् । आवृणीमहे प्रार्थयामहे । येनास्मदीयान् पितॄनपि अचोदयः प्रेरितवान् । महत्सु प्रतिभयेषु वाध्वनि वा प्रेरितवानसीत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

आ तत् ते । आवृणीमहे तद् रक्षणं तव दर्शनीय ! ज्ञानवन् ! येन पितॄनङ्गिरसः पणिभिरपहृतासु गोष्वचोदयः ॥ ५ ॥

इति प्रथमस्य तृतीये चतुर्विंशो वर्गः ॥

---

अधानोविश्वसौभगहिरण्यवाशीमत्तम ।

धनानिसुषणाकृधि ॥ ६ ॥

अध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम । धनानि ।

सुऽसना । कृधि ॥ ६ ॥

स्कन्दस्वामीयम् ।

अधानो विश्वसौभग । अधशब्दः पदपूरणः । अपिचेत्यस्य वार्थे । अपिच । नः अस्माकम् । हे विश्वसौभग ! बहु शोभनं धनं यस्य स विश्वसौभगः, तस्य सम्बोधनं विश्वसौभग । हिरण्यवाशीमत्तम ! वाशीति वाङ्-

---

१ 'द्वा' ग पाठः.

नाम । हिरण्यसदृशी प्रीतिकरी हितरमणा वातिशयेन (वाक्) यस्य स हिरण्यवाशीमत्तमः । तस्य सम्बोधनं हे हिरण्यवाशीमत्तम! । धनानि सुषणा सुसंभजनीयानि । कृधि कुरु । यानि धनानि लब्धुं वयं प्रस्थिताः, तानि सुलभानि कुर्वित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

अधानः । अथास्माकं विश्वकल्याणातिशयेन हिरण्यवा(न्युः? शीयु)क्त धनानि सुदानानि कुरु ॥ ६ ॥

अति॑ नः स॒श्चतो॑ नय सु॒गा नः॑ सु॒पथा॑ कृणु ।

पूष॑न्नि॒ह क्रतुं॑ विदः ॥ ७ ॥

अति॑ । नः॒ । स॒श्चतः॑ । न॒य॒ । सु॒ऽगा । नः॒ । सु॒ऽपथा॑ । कृ॒णु॒ ।

पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः॒ ॥ ७ ॥

स्कन्दस्वामीयम् ।

अति नः सश्चतो नय । नः अस्मान् । सश्चतः गच्छतः । अतिशयशोभनं नय प्रापय अभिप्रेतं देशम् । नच येनकेनचित् पथा । किन्तर्हि, सुगा सुगमनेन । नः अस्मान् । सुपथा शोभनेन पथा । कृणु । करोतिः क्रियासामान्यवचनः सामर्थ्यादिह नयने वर्तते । नय । हे पूषन्! इह पथि । क्रतुमात्मीयं कर्म रक्षाख्यं विदः जानीहि । ज्ञानेन चात्र करणं प्रतिपाद्यते । कुर्वित्यर्थः । तव ह्येतत् कर्म यत् पथि रक्षणम् ॥ ७ ॥

वेङ्कटमाधवीयम् ।

अति नः । चौरैः सक्तानस्मानतिशयेन (नय) । सुगमनेन शोभनेन पथा चास्मान् । कृणु पूषन्नध्वनि प्रज्ञानं लम्भयेति ॥ ७ ॥

अ॒भि सू॒यव॑सं नय॒ न न॑व॒ज्वारो॒ अध्व॑ने ।

पूष॑न्नि॒ह क्रतुं॑ विदः ॥ ८ ॥

अ॒भि । सु॒ऽयव॑सम् । न॒य॒ । न । न॒व॒ऽज्वारः । अध्व॑ने ।

पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः॒ ॥ ८ ॥

स्कन्दस्वामीयम्।

अभि सूयवसं नय शोभनमन्नमभिनय प्रापयास्मान् प्रति, देह्यस्मभ्यमित्यर्थः। यस्मान्न नवज्वारो अध्वने। ज्वरसदृशत्वाज्ज्वारोऽत्र बुभुक्षोच्यते। सा नवा यस्य स नवज्वारः अत्यन्तबुभुक्षितः। अध्वने न समर्थः यस्माद् बुभुक्षितो नाध्वानं गन्तुं शक्नोतीत्यर्थः। अथवा नवं नवं ज्वरयति पुनः पुनः सन्तापयतीति नवज्वारोऽग्निरादित्यो वोच्यते। नशब्दश्च पुरस्तादुपचारोऽप्यत्र सामर्थ्यादुपमार्थीयो द्रष्टव्यः। नवज्वारो न अग्निरिव आदित्य इव। यथाग्निरादित्यो वा प्रापयति, तद्वदित्यर्थः। किमर्थम्। अध्वने। मार्गार्थम्। पथ्यदनार्थमित्यर्थः। किञ्च, पूषन्निह क्रतुं विदः। अथवैवमन्यथास्या ऋचोऽर्थयोजना —शोभना यवसा (यासीत्? यस्मिन्) तं सूयवसं सन्तं देशं प्रापयास्मान् नवज्वार इव। किञ्च, अध्वने पूषन्निह। अध्वन इति सप्तम्यर्थे चतुर्थी इहेत्यनेन समानाधिकरणः। इहाध्वनि। पूषन्! क्रतुं रक्षार्थमात्मकर्म विदः॥ ८॥

वेङ्कटमाधवीयम्।

अभि सूयवसम्। अभिनयास्मान् सूयवसं देशं प्रापय न च नवज्वालो दवाग्निरध्वने भवतु॥ ८॥

शग्धिपूर्धिप्रयंसिचशिशीहिप्रास्युदरम्।

पूषन्निहक्रतुंविदः॥ ९॥

शग्धि। पूर्धि। प्र। यंसि। च। शिशीहि। प्रासि। उदरम्। पूषन्। इह। क्रतुम्। विदः॥ ९॥

स्कन्दस्वामीयम्।

शग्धि पूर्धि। शग्धीति याच्ञाकर्मा। याच्ञया चात्र दानं लक्ष्यते देहीति। पूर्धि पूरय। बहु देहीत्यर्थः। मा च निकृष्टम्। किन्तर्हि, प्रयंसि च। यच्छतिर्दानार्थः। लोडर्थे चात्र लट्। प्रयच्छ च। प्रकृष्टं च देहीत्यर्थः। दत्त्वा च शिशीहि। श्यतिः संस्कारार्थः। संस्कुरु। सर्वार्थयोग्यं कुर्वित्यर्थः। प्रासि। प्रा पूरणे'। लोडर्थे चात्र लट्। प्राभिपूरय चास्मदीयमुदरम्। जीवनोपायं चास्माकं कल्पयेत्यर्थः। किञ्च, पूषन्निह क्रतुं विदः॥ ९॥

वेङ्कटमाधवीयम् ।

शग्धि पूर्धि । शक्तो भव । पूरय कामान् । प्रयच्छ धनानि । संस्कुरु चास्मान् । पूरय चोदरम् ॥ ९ ॥

नपूषणंमेथामसिसूक्तैरभिगृणीमसि ।

वसूनिदस्ममीमहे ॥ १० ॥

न पूषणम् । मेथामसि । सुऽउक्तैः । अभि । गृणीमसि । वसूनि । दस्मम् । ईमहे ॥ १० ॥

स्कन्दस्वामीयम् ।

न पूषणं मेथामसि । मेथतिराक्रोशकर्मा । नाक्रोशामः, नायोग्याभिः स्तुतिभिः स्तुम इत्यर्थः । किन्तर्हि, सूक्तैः शोभनैर्वचनैः । अभिगृणीमसि अभिष्टुमः । अभिष्टुत्य च वसूनि धनानि, दस्मं चोराणां तमसां चोपक्षयितारं दर्शनीयं वा, ईमहे याचामहे ॥ १० ॥

वेङ्कटमाधवीयम् ।

न पूषणम् । न वयं पूषणमाक्रोशामः, किन्तु सूक्तैरभिष्टुमो धनानि दर्शनीयं याचामहे ॥ १० ॥

इति प्रथमस्य तृतीये पञ्चविंशो वर्गः ।

---

कद्रुद्रायप्रचेतसेमीह्लुष्टमायतव्यसे ।

वोचेमशन्तमंहृदे ॥ १ ॥

कत् । रुद्राय । प्रऽचेतसे । मीह्लुःऽतमाय । तव्यसे । वोचेम । शम्ऽतमम् । हृदे ॥ १ ॥

स्कन्दस्वामीयम् ।

कद्रुद्राय । पौष्णं समाप्य षट् रौद्र्यः । सम्पूषन्नित्येतत् पौष्णं समाप्य कद्रुद्रायेत्येता षडृचो रुद्रदेवत्याः प्रत्येतव्याः । कद् रुद्राय प्रचेतसे प्रवृद्धज्ञानाय मीह्लुष्टमाय । मीह्लु इति धननाम । तद्वान् मीढ्वान् । अथवा

'मिह सेचने' इत्यस्य वा मीढ्वान् सेक्ता मध्यमस्थानत्वाद् वर्षिता रुद्रः । अतिशयेन मीढ्वान् मीह्ळुष्टमः । तस्मै मीह्ळुष्टमाय । तव्यसे । तवतिर्वृद्धिकर्मा । वृद्धाय । वोचेम शन्तमं सुखतमं हृदे हृदयस्य मनसः प्रीतिकरमित्यर्थः । कम् । सामर्थ्यात् स्तोमम् ॥ १ ॥

### वेङ्कटमाधवीयम् ।

कद् रुद्राय । कदा वयं रुद्राय प्रचेतसे सेक्तृतमाय वृद्धाय हृदयस्य शन्तमं स्तोत्रं वोचेमेति स्तोतुकामस्य वचनम् ॥ १ ॥

कथञ्च पुनर्वोचेम —

**यथा॑ नो॒ अदि॑तिः॒ कर॒त्पश्वे॒ नृभ्यो॒ यथा॒ गवे॑ ।**
**यथा॑ तो॒काय॑ रु॒द्रिय॑म् ॥ २ ॥**

यथा॑ । नः॒ । अदि॑तिः । कर॑त् । पश्वे॑ । नृऽभ्यः॑ । यथा॑ । गवे॑ । यथा॑ । तो॒काय॑ । रु॒द्रिय॑म् ॥ २ ॥

### स्कन्दस्वामीयम् ।

यथा नो अदितिः । यथा नोऽस्माकम् । अदितिः अनुपक्षीणो रुद्रः । करत् कुर्यात् । दद्यादित्यर्थः । किम् । पश्वे । सर्वत्र द्वितीयार्थे चतुर्थी । पशुमश्वादिपशुजातम् । नृभ्यः परिचारकांश्च मनुष्यान् । यथा च गवे गां गोजातम् । यथा तोकाय । तोकमपत्यम् । कीदृशम् । रुद्रियं रुद्रार्हम् । यद्रुद्र एव दातुमर्हति नान्यः कश्चिदित्यर्थः । अथवा पश्व इत्याद्याः स्वार्थ एव । तादर्थ्ये चतुर्थी । अदितिरित्यदितिशब्दोऽनुपक्षयवचनः । द्वितीयार्थे चात्र प्रथमा । यथा नः अस्माकम् अदितिमनुपक्षयं कुर्यात् पश्वाद्यर्थमिति । यथास्मदीयानां पश्वादीनामनुपक्षयं कुर्यादित्यर्थः । अथवा अदितिरिति स्वार्थ एव प्रथमा । यथा न इत्यपि चतुर्थी । क्रियमाणं तत् सामर्थ्यात् पालनम् । यथास्मदीयं पश्वाद्यर्थञ्च पालनं कुर्यादित्यर्थः । कीदृशमनुपक्षयं पालनं वा । उच्यते । रुद्रियं रुद्रार्हमिति । यथा नोऽस्मानदितिः । करत् पश्वाद्यनुपक्षयपालनानामन्यतमं तथा कद्रुद्राय वोचेम शन्तमं स्तोममित्येवमस्या ऋचो यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यता ॥ २ ॥

### वेङ्कटमाधवीयम् ।

यथा नः । यथास्माकमियं पृथिवी भेषजं पश्वादिभ्यः कुर्यादिति ॥ २ ॥

यथा॑नो॒मि॒त्रोवरु॑णो॒यथा॑रु॒द्रश्चिके॑तति ।

यथा॒विश्वे॑स॒जोष॑सः ॥ ३ ॥

यथा॑ । नः॒ । मि॒त्रः । वरु॑णः । यथा॑ । रु॒द्रः । चिके॑तति ।

यथा॑ । विश्वे॑ । स॒ऽजोष॑सः ॥ ३ ॥

स्कन्दस्वामीयम् ।

यथा नो मित्रो वरुणः तृतीया नतु केवला ।

सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे ॥

तृतीयेयमृङ् न रौद्र्येव केवला । किन्तर्हि । सह मित्रावरुणाभ्यां रुद्रस्य संस्तवः प्रथमेऽर्धर्चे । द्वितीयेऽपि विश्वैर्देवैः सह । कुत एतत् । ऋगक्षरेषु च दर्शनात् । बृहद्देवताकारस्य वचनात् । एवं ह्याह —

"तृतीया नतु केवला ।

मित्रेण वरुणेनात्र विश्वैर्देवैश्च संस्तवः ॥"

इति । इहापि 'तृतीया । सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे' इत्येतावता सिद्धे 'तृतीया न तु केवले'ति वचनं समस्तायास्तृतीयायाः अकेवलरुद्रदेवत्यप्रतिपत्त्यर्थम् । तस्माद् द्वितीये ह्यर्धर्चे विश्वैर्देवैः संस्तव इति सिद्धः । यथास्मान् मित्रो वरुणश्च यथा च रुद्र एव स्वयं चिकेतति जानाति । यथा च विश्वेदेवाः । किम् । साकाङ्क्षत्वाच्चिकेततिरनुषक्तव्यः । चिकेतन्ति जानन्ति । कीदृशाः । सजोषसः संप्रीयमाणाः । यथा मित्रादीनां देवानामपि प्रकाशा भवेम, तथा रुद्राय वोचेम स्तोममित्यर्थः । एवमनयोरर्धर्चयोरप्यृचोर्यथा नो अदितिः करत् पश्वाद्यनुपक्षयपालनानामन्यतमं यथा चापि मित्रादयो देवा अपि चिकेतन्ति, तथा कदा रुद्राय वोचेम शन्तमं हृदयस्य स्तोममिति यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यताभावात् तस्याश्च रुद्रप्राधान्यादनयोरपि रुद्रप्राधान्यमेवावगम्यते । नैघण्टुकत्वं मित्रादीनाम् । तत्र यद् भगवता शौनकेनोक्तम् ॥

"तृतीया नतु केवला ।

सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे"

इति, तद् यथोक्तं पर्येष्यम् ॥ ३ ॥

वेङ्कटमाधवीयम् ।

यथा नः । यथास्मान् मित्रावरुणौ जानीतो रुद्रस्तुतिप्रवृत्तान्, यथा वा स्वयं रुद्रो, यथा वा सर्वं एव देवा एकीभूताः, तथा रुद्रा बोधयेति ॥ ३ ॥

गाथपतिंमेधपतिंरुद्रंजलाषभेषजम् ।

तच्छंयोःसुम्नमीमहे ॥ ४ ॥

गाथऽपतिम् । मेधऽपतिम् । रुद्रम् । जलाषऽभेषजम् । तत् । शम्ऽयोः । सुम्नम् । ईमहे ॥ ४ ॥

स्कन्दस्वामीयम् ।

गाथपतिं मेधपतिम् । गाथा स्तुतिलक्षणा वाक् । तस्या अधिपतिं स्वामिनं, स्तुतिभिः स्तुत्यमित्यर्थः । मेधपतिं यज्ञानां स्वामिनं रुद्रम् । जलाषभेषजम् । जलाषमिति सुखनाम । तस्य भेषजमौषधभूतं, सुखस्योत्पादकमित्यर्थः । तच्छब्दश्रुतेर्योग्यार्थसम्बद्धो यच्छब्दोऽध्याहार्यः । यदत्यन्तोत्कृष्टं तत् (सुम्नम् ।) शंयोः सुखकामस्य यजमानस्यात्मनो वा कण्वाख्यस्य ऋषेरर्थाय ईमहे याचामहे ॥ ४ ॥

वेङ्कटमाधवीयम् ।

गाथपतिम् । स्तोत्रपतिं यज्ञपतिं रुद्रं सुखकरभेषजं बार्हस्पत्यस्य शंयोर्यत् प्रजाविषयं सुखं, तद् याचामहे ॥ ४ ॥

यःशुक्रइवसूर्योहिरण्यमिवरोचते ।

श्रेष्ठोदेवानांवसुः ॥ ५ ॥

यः । शुक्रःऽइव । सूर्यः । । हिरण्यम्ऽइव । रोचते । श्रेष्ठः । देवानाम् । वसुः ॥ ५ ॥

स्कन्दस्वामीयम् ।

यः शुक्र इव । यः रुद्रः शुक्र इव सूर्यः शुक्लवर्णः सूर्यः । हिरण्यमिव । यथा च हिरण्यं रोचते तद्वद् रोचते दीप्यते । श्रेष्ठश्च देवानां मध्ये । वसुर्धनं वा प्रशस्यो वा । यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्यैकवाक्यतया योज्या । सः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

यः शुक्र इव । यो ज्वलन्निव सूर्यो हिरण्यमिव रोचते श्रेष्ठो देवानां वासयिता । उत्तरत्र सम्बन्धः ॥ ५ ॥

इति प्रथमस्य तृतीये षड्विंशो वर्गः ।

---

शंनः करत्यर्वते सुगंमेषाय मेष्ये ।

नृभ्यो नारिभ्यो गवे ॥ ६ ॥

शम् । नः । करति । अर्वते । सुऽगम् । मेषाय । मेष्ये ।
नृऽभ्यः । नारिऽभ्यः । गवे ॥ ६ ॥

स्कन्दस्वामीयम् ।

शं नः करति । शं सुखमस्माकं स्वभूताय करति करोतु । अर्वते । अर्वेत्यश्वनाम । अश्वाय । सुगं स्वधिगमम् । सुप्रियमित्यर्थः । अथवा शमिति सुगमिति समुच्चीयमाने एते । सुखं च पन्थानं च अश्वाय करोत्वित्यर्थः । न च केवलाय । किन्तर्हि । मेषाय मेष्ये नृभ्यः नारिभ्यश्च गवे च ॥ ६ ॥

वेङ्कटमाधवीयम् ।

शं नः करति । सोऽस्माकमश्वादीनां शोभनागमनं सुखं करोतु ॥ ६ ॥

अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् ।

महि श्रवस्तुविनृम्णम् ॥ ७ ॥

अस्मे इति । सोम । श्रियम् । अधि । नि । धेहि । शतस्य ।
नृणाम् । महि । श्रवः । तुविऽनृम्णम् ॥ ७ ॥

स्कन्दस्वामीयम् ।

तिस्रः सौम्याः । तिस्र एता ऋचः सोमदेवत्याः । अस्मे अस्मासु हे सोम ! श्रियमधि निधेहि । अधिशब्दः 'अधिपरी अनर्थकौ' (१-४-९३) इति कर्मप्रवचनीयः पदपूरणः । निधेहि स्थापय । अस्मभ्यं देहीत्यर्थः ।

कियतीम्। उच्यते। शतस्य नृणां मनुष्यशतस्य योग्याम्। अत्यन्तमहतीमित्यर्थः। महि श्रवः महच्च यशः तुविनृम्णं बहुबलोपेतम्। बलञ्च बह्वित्यर्थः ॥७॥

वेङ्कटमाधवीयम्।

अस्मे सोम! सौम्यास्तृचः। अस्मासु सोम! श्रियमधिनिधेहि मनुष्याणां शतस्य पर्याप्तां, महच्चान्नं बहु बलम्॥ ७॥

मानःसोमपरिबाधोमारातयोजुहुरन्त।
आनइन्दोवाजेभज ॥८॥

मा। नः। सोमऽपरिबाधः। मा। अरातयः। जुहुरन्त।
आ। नः। इन्दो इति। वाजे। भज ॥ ८॥

स्कन्दस्वामीयम्।

मा नः अस्मान् सोमपरिबाधः सोमस्य परिबाधितारः अपहर्तारो राक्षसादयः। मा वा अरातयः शत्रवः। जुहुरन्त। हुर्च्छेर्वा ह्वयतेर्वा सम्मोहनार्थस्यैतद्रूपम्। मा यज्ञेऽन्यत्र च संमोहं प्रापिपन्नित्यर्थः। त्वमपि नोऽस्मान् हे इन्दो! सोम!। वाजे। सङ्ग्रामनामैतत्। सङ्ग्रामस्थानीये यज्ञे सङ्ग्राम एव वा। आभज सेवस्व ॥ ८॥

वेङ्कटमाधवीयम्।

मा नः सोम। मास्मानपहर्तारो हिंसन्तु सोम!, मा च शत्रवः। त्वमस्मानिन्दो! सङ्ग्रामे सेवस्व॥ ८॥

यास्तेप्रजाअमृतस्यपरस्मिन्धामन्नृतस्य।
मूर्धानाभासोमवेनआभूषन्तीःसोमवेदः ॥ ९॥

याः। ते। प्रऽजाः। अमृतस्य। परस्मिन्। धामन्। ऋतस्य।
मूर्धा। नाभा। सोम। वेनः। आऽभूषन्तीः। सोम। वेदः॥ ९॥

स्कन्दस्वामीयम्।

यास्ते प्रजाः। षष्ठीनिर्देशेन परिचारका इति वाक्यशेषः। यास्ते तव परिचारका अस्मदाद्याः प्रजाः। अमृतस्यामरणधर्मणः। परस्मिन् धामन्

वेद्याख्ये स्थाने । ऋतस्य गतस्य, प्राप्तस्य सत इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ताः । मूर्धा मूर्धनि प्रधानभूते । नाभा पृथिव्या नाभिस्थानीय उत्तरवेद्याख्ये स्थाने । हे सोम! । वेनः । वेनतिः कान्तिकर्मा । कामयस्व । किञ्च, आभूषन्तीः सोम वेदः। आभूषन्तीरित्याङ् मर्यादायाम् । 'भूष अलङ्कारे' । मर्यादया त्वलङ्कुर्वतीः । हे सोम! वेदः विद्धि । अथवा आभूषन्तीरिति 'भू सत्तायामि'त्येतस्यैव रूपम् । मर्यादया भवन्तीः । श्रुतिस्मृत्युदितायां मर्यादायां वर्तमाना इत्यर्थः । हे सोम! वेदः । विदित्वा च मत्प्रवणा एता न्यायवृत्ताश्चेति मन्यमानः कामयस्वेत्यर्थः ॥ ९ ॥

### वेङ्कटमाधवीयम् ।

यास्ते प्रजाः यास्ते सोम ! प्रजा अमृतस्य तृतीये लोके स्थितस्य परिचरन्ति, ता (न्त ? स्त)द्धविः सर्वेषामुच्छ्रितस्त्वमुत्तरवेदिनाभौ कामयस्व । त्वां परिचरन्तीश्च ता जानीहीति ॥ ९ ॥

**इति प्रथमस्य तृतीये सप्तविंशो वर्गः ॥**

---

**अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य ।**

**आ दा॒शुषे॑ जातवेदो वहा॒ त्वम॒द्या दे॒वाँ उ॑ष॒र्बुध॑: ॥ १ ॥**

अग्ने॑ । विव॑स्वत् । उ॒षस॑: । चि॒त्रम् । राध॑: । अ॒म॒र्त्य॒ । आ । दा॒शुषे॑ । जात॑ऽवेदः । व॒ह॒ । त्वम् । अ॒द्य । दे॒वान् । उ॒षः॒ऽबुध॑: ॥ १ ॥

### स्कन्दस्वामीयम् ।

अग्ने विवस्वत् । 'अग्ने विवस्वदि'ति प्रस्कण्वः काण्व उच्यते । प्रस्कण्वो नाम कण्वपुत्र ऋषिरुच्यते । आग्नेये सूक्ते । अग्निदेवत्ये द्वे एते सूक्ते। प्रागाथे प्रथमेऽश्विनौ सहोषसा लिङ्गभाजौ । यस्त्वयं प्रथमः प्रागाथः, द्व्यृच इत्यर्थः । अत्राश्विनौ सहोषसा लिङ्गभाजौ गुणत्वभाजावित्यर्थः। अश्विनौ उषाश्चाग्नेर्गुणभूता अत्र स्तूयन्त इत्यर्थः । हे अग्ने! विवस्वत् विवासनवत् । तमसां विवासनकरम् । किं तत् । सामर्थ्याज्ज्योतिः । कस्य । उच्यते । उषसः । कीदृशम् । चित्रं विचित्रं पूज्यं वा । राधः । धननामैतत् ।

इह तु धनसादृश्यादौषसे ज्योतिषि वर्तते । उज्ज्वलत्वेन प्रीतिकरत्वेन धनसदृशम् । हे अमर्त्य ! । आ दाशुषे यजमानस्यार्थाय । हे जातवेदः ! जातप्रज्ञान आवह त्वमद्य । न च केवलमौषसं ज्योतिः । किन्तर्हि अन्यानपि देवान् । कीदृशान् । उषर्बुधः । यागगमनार्थमुषःकाले ये बुध्यन्ते ते उषर्बुधः, तान् । (अथवा) विवस्वदित्यग्नेरेव सम्बोधनम् । छान्दसत्वात्तु नुमभावः । उषस इत्यपि द्वितीयाबहुवचनान्तमाहूयमानवचनम् । चित्रं राध इत्यपि हविर्लक्षणं धनमभिप्रेतम् । द्वितीयानिर्देशाच्च कर्मप्रवचनीयप्रतिशब्दाध्याहारः । हे अग्ने ! विवस्वन् विवसनवन् ! तमसां विवासयितः । उषसश्चित्रं हविर्लक्षणं धनं प्रति देवांश्चावहेति ॥ १ ॥

### वेङ्कटमाधवीयम् ।

अग्ने विवस्वत् । प्रस्कण्वः काण्वः । अग्ने ! परिचरणवदुषसः पूज्यं धनममर्त्य ! । यजमानायावह जातधन ! । त्वं तथोषर्बुधश्चाद्य देवानावह ॥ १ ॥

**जुष्टो॒ हि दू॒तो असि॑ हव्य॒वाह॒नोऽग्ने॑ र॒थीर॑ध्व॒राणा॑म् ।**
**स॒जूर॒श्विभ्या॑मु॒षसा॑ सु॒वीर्य॑म॒स्मे धे॑हि॒ श्रवो॑ बृ॒हत् ॥ २ ॥**

जुष्टः॑ । हि । दू॒तः । असि॑ । ह॒व्य॒ऽवाह॑नः । अग्ने॑ । र॒थीः । अ॒ध्व॒राणा॑म् । स॒ऽजूः । अ॒श्विऽभ्या॑म् । उ॒षसा॑ । सु॒ऽवीर्य॑म् । अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् ॥ २ ॥

### स्कन्दस्वामीयम् ।

जुष्टो हि । हिशब्दो यस्मादर्थे । यस्माज्जुष्टः प्रियः । दूतश्चासि । हव्यवाहनः हविषां वोढा । हे अग्ने ! रथीः । रथो यस्यास्ति स रथी सारथिः तत्स्थानीयश्च । अध्वराणां यज्ञानाम् । यस्मादिति वचनात् तस्मादित्यध्याहर्तव्यम् । तस्मात् । सजूः सम्प्रीयमाणः । अश्विभ्यामुषसा च सह सुवीर्यं[1] शोभनेन गोग्रहणेन वीर्येण सहितम् । अस्मे अस्मभ्यम् । धेहि । देहि श्रवो धनं यशोऽन्नं वा । बृहत् महत् ॥ २ ॥

---

१. 'र्यं गोग्रहणे वी' क. ख. पाठः,

## वेङ्कटमाधवीयम् ।

जुष्टो हि । पर्याप्तो हि दू(र ?)तस्त्वमसि हविषां वोढाऽग्ने ! रथीरध्वराणाम् । "रथो ह वा एष भूतो देवेभ्यो हव्यं वहती"ति ब्राह्मणम् । स त्वमश्विभ्यामुषसा च सहितः शोभनवीर्यं महदन्नमस्मासु धेहि ॥ २ ॥

**अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियम् ।**

**धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम् ॥ ३ ॥**

**अद्य । दूतम् । वृणीमहे । वसुम् । अग्निम् । पुरुऽप्रियम् । धूमऽकेतुम् । भाःऽऋजीकम् । विऽउष्टिषु । यज्ञानाम् । अध्वरऽश्रियम् ॥ ३ ॥**

## स्कन्दस्वामीयम् ।

अद्यादूतंवृणीमहे । वसुं धनवन्तं प्रशस्यं वा । अग्निम् । पुरुप्रियं बहूनां यजमानानां प्रियम् । धूमकेतुं धूमेन यः केत्यते ज्ञायते स धूमकेतुः तं धूमकेतुम् । अथवा धूमस्य कर्ता धूमकेतुः तं धूमकेतुम् । भाऋजीकम् । (ऋजुकः) भाः दीप्तिर्यस्य स भाऋजीकः । छान्दसमृजुकशब्दस्य उकारस्य ईत्वम् । भाःशब्दस्य पूर्वनिपातः । तं भाऋजीकम् ऋजुभासम् । कस्यां वेलायाम् । उच्यते । व्युष्टिषु उषसां व्युष्टिवेलायां प्रभातकाल इत्यर्थः । यज्ञानामध्वरश्रियम् । ध्वरतिर्हिंसाकर्मा । अध्वरा अहिंसिता श्रीर्येन सः । (तम्) अध्वरश्रियम् । कस्याध्वरश्रियम् । यज्ञानामध्वरश्रियम् । अहिंसकमित्यर्थः ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

अद्यादूतम् । अद्य दूतं वृणीमहे वासयितारमग्निं बहुप्रियं धूमप्रज्ञानं प्रसिद्ध-भासमुषसो व्युष्टिषु यज्ञानां योऽध्वरं श्रयति ॥ ३ ॥

**श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।**

**देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥ ४ ॥**

**श्रेष्ठम् । यविष्ठम् । अतिथिम् । सुऽआहुतम् । जुष्टम् । जनाय । दाशुषे । देवान् । अच्छ । यातवे । जातऽवेदसम् । अग्निम् । ईळे । विऽउष्टिषु ॥ ४ ॥**

स्कन्दस्वामीयम् ।

श्रेष्ठंयविष्ठम् । श्रेष्ठं प्रशस्यतमम् । यविष्ठं युवतमम् । अतिथिम् अतिथिस्थानीयं यजमानानाम् । स्वाहुतं सुष्ठ्वभिहुतं सर्वयजमानैः । जुष्टं प्रियम् । जनाय दाशुषे । षष्ठ्यर्थे चतुर्थी । यजमानस्य । देवान् अच्छायातवे अभियातुम् । जातवेदसम् अग्निम् । ईळे स्तौमि । व्युष्टिषूषसां, प्रभातकाल इत्यर्थः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

श्रेष्ठंयविष्ठम् । प्रशस्यतमं युवतमं यजमानानामतिथिं सुष्ठ्वाहुतं पर्याप्तं जनाय यजमानाय देवान् प्रति गन्तुं जातप्रज्ञमग्निं स्तौमि प्रातःकालेषु ॥ ४ ॥

स्तविष्यामित्वामहंविश्वस्यामृतभोजन ।
अग्नेत्रातारममृतंमियेध्ययजिष्ठंहव्यवाहन ॥ ५ ॥

स्तविष्यामि । त्वाम् । अहम् । विश्वस्य । अमृत । भोजन । अग्ने । त्रातारम् । अमृतम् । मियेध्य । यजिष्ठम् । हव्यऽवाहन ॥ ५ ॥

स्कन्दस्वामीयम् ।

स्तविष्यामित्वाम् । स्तोष्यामि त्वामहम् । हे विश्वस्यामृत ! भोजन ! । विश्वस्येत्येतत् भोजनेत्येतेन सम्बध्यते । सर्वस्य हविर्लक्षणस्यान्नस्य भोक्तः ! मरणवर्जित ! । हे अग्ने ! । कीदृशम् । उच्यते । सर्वस्तोतॄणां त्रातारम् । हे मियेध्य ! यज्ञार्ह ! यजिष्ठं यष्टृतमम् । हे हव्यवाहन ! हविषां वोढः ! ॥ ५ ॥

वेङ्कटमाधवीयम् ।

स्तविष्यामि । स्तोष्यामि त्वामहममृत ! सर्वस्य पुरुभोजयितः ! अग्ने ! रक्षितारममृतं यज्ञार्हं यष्टृतमं हविषां वोढः ! ॥ ५ ॥

इति प्रथमस्य तृतीये अष्टाविंशो वर्गः ।

सुशंसोबोधिगृणतेयविष्ठ्यमधुजिह्वःस्वाहुतः ।
प्रस्कण्वस्यप्रतिरन्नायुर्जीवसेनमस्यादैव्यंजनम् ॥ ६ ॥

सुऽशंसः । बोधि । गृणते । यविष्ठ्य । मधुऽजिह्वः । सुऽआहुतः । प्रस्कण्वस्य । प्रऽतिरन् । आयुः । जीवसे । नमस्य । दैव्यम् । जनम् ॥ ६ ॥

## स्कन्दस्वामीयम् ।

सुशंसो बोधि । सुशंस इत्येतन्नामन्त्रितम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं, सुशंसः सुस्तवः । बोधि बुध्यस्व । शृण्वित्यर्थः । गृणते गृणतः स्तुवतो मम । हे यविष्ठ्य ! । स्वार्थिको यः । यविष्ठ ! युवतम ! । मधुजिह्वः । मधुस्वादमाज्यं मधु । तस्मिन् जिह्वा यस्य स मधुजिह्वः । नित्यमाहुतिलक्षणस्याज्यस्य स्वादयितेत्यर्थः । अथवा जिह्वेति वाङ्नाम । मधुरवचनो मधुजिह्वः, तस्य सम्बोधनं हे मधुजिह्व ! । स्वाहुतः सुष्ठ्वभिहुतः सन् । किञ्च, प्रस्कण्वस्य प्रतिरन् प्रवर्धयन्, आयुर्जीवसे चिरजीवनाय नमस्य नमस्कुरु । दैव्यं जनं, सर्वदेवानित्यर्थः ॥ ६ ॥

## वेङ्कटमाधवीयम् ।

सुशंसो बोधि । सुस्तवो बुध्यस्व स्तुवते युवतम ! मादयितृजिह्व ! स्वाहुतः । प्रस्कण्वस्य मम जीवनायायुर्वर्धयन् नमस्कुरु सर्वान् देवान् ॥ ६ ॥

**होतारंविश्ववेदसंसंहित्वाविशइन्धते ।**

**सआवहपुरुहूतप्रचेतसोग्नेदेवाँइहद्रवत् ॥ ७ ॥**

होतारम् । विश्वऽवेदसम् । सम् । हि । त्वा । विशः । इन्धते । सः । आ । वह । पुरुऽहूत । प्रऽचेतसः । अग्ने । देवान् । इह । द्रवत् ॥ ७ ॥

## स्कन्दस्वामीयम् ।

होतारं विश्ववेदसम् । स आवहेति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यं[1] होतारं, विश्ववेदसं सर्वधनं सर्वप्रज्ञं वा । सं हि त्वा विश इन्धते । हिशब्दः पदपूरणः । त्वां विशो मनुष्याः समिन्धते सन्दीपयन्ति, स आवह पुरुहूत ! । प्रचेतसः प्रवृद्धज्ञानान् । हे अग्ने ! देवान् इह द्रवत् क्षिप्रम् ॥ ७ ॥

---

1. 'वैश्वं' ख. पाठः,

वेङ्कटमाधवीयम्।

होतारं विश्ववेदसम्। होतारं सर्वधनं समिन्धते हि त्वां विशः। स त्वमावह पुरुहूत! प्रचेतसोऽग्ने! देवानिह क्षिप्रम्॥ ७॥

कतमान्। उच्यते —

**सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः।**
**कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर॥ ८॥**

सवितारम्। उषसम्। अश्विना। भगम्। अग्निम्। विऽउष्टिषु। क्षपः। कण्वासः। त्वा। सुतऽसोमासः। इन्धते। हव्यऽवाहम्। सुऽअध्वर॥ ८॥

स्कन्दस्वामीयम्।

सवितारम्, उषसम् अश्विना भगमात्मानमेव चाग्निं व्युष्टिषु क्षपः क्षपायाः रात्रेः प्रभातकाल इत्यर्थः। कण्वासस्त्वा कण्वपुत्रा मत्प्रभृतयः त्वाम्। सुतसोमासः कृतसोमाभिषवाः। इन्धते दीपयन्ति। हव्यवाहम्। हे स्वध्वर! सुयज्ञ!॥ ८॥

वेङ्कटमाधवीयम्।

सवितारम्। सवितृप्रभृतीनग्निं च यष्टव्यं रात्र्या व्युष्टिषु त्वमावह। कण्वपुत्रा अभिषुतसोमास्त्वां दीपयन्ति हव्यवाहं, स्वध्वर!॥ ८॥

**पतिर्ह्यध्वराणामग्ने दूतो विशामसि।**
**उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः॥ ९॥**

पतिः। हि। अध्वराणाम्। अग्ने। दूतः। विशाम्। असि। उषःऽबुधः। आ। वह। सोमऽपीतये। देवान्। अद्य। स्वःऽदृशः॥ ९॥

स्कन्दस्वामीयम्।

पतिर्ह्यध्वराणाम्। हिशब्दो यस्मादर्थे। यस्मात् पतिः स्वामी त्वमध्वराणां हे अग्ने! दूतश्च विशां मनुष्याणामसि। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्।

तस्मादुषर्बुधः । उषःकाले ये बुध्यन्ते त उषर्बुधः । तानावह सोमपीतये देवानद्य । कीदृशान् । स्वर्दृशः । स्वरादित्यः द्यौर्वा । तद्वद् ये दृश्यन्ते, तस्य द्रष्टारः, ते स्वर्दृशः । तानादित्यस्य दिवो वा सदृशान् तद्दर्शिनो वेत्यर्थः ॥ ९ ॥

### वेङ्कटमाधवीयम् ।

पतिर्हि । पतिर्हि यज्ञानाम् अग्ने! दूतो विशामसि । स उषसि प्रबुद्धानावह सोमपानाय देवानद्य सर्वस्य द्रष्टॄन् ॥ ९ ॥

अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।
असि ग्रामेष्वविता पुरोहितोऽसि यज्ञेषु मानुषः ॥ १० ॥

अग्ने । पूर्वाः । अनु । उषसः । विभावसो इति विभाऽवसो । दीदेथ । विश्वऽदर्शतः । असि । ग्रामेषु । अविता । पुरःऽहितः । असि । यज्ञेषु । मानुषः ॥ १० ॥

### स्कन्दस्वामीयम् ।

अग्ने पूर्वाः । हे अग्ने! पूर्वा अनूषसः । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । एकस्या एवोषसः कालभेदापेक्षया पूर्वापरव्यपदेशः । अवयवापेक्षञ्च बहुवचनम् । पूर्वा उषसः प्रति । अद्य एवोषस उदयकाल इत्यर्थः । हे विभावसो! । विविधा भा धनं यस्य स विभावसुः । तस्य सम्बोधनं हे विभावसो! । दीदेथ दीप्यस्व । विश्वदर्शतः सर्वस्य दर्शनीयः । सर्वजनप्रकाश इत्यर्थः । किं कारणम् । उच्यते । यस्मादसि ग्रामेष्वविता । जनपदनिवासस्थानानि ग्रामाः । तेषु रक्षिता त्वमसि । पुरोहितोऽसि यज्ञेषु । पूर्वस्यां दिश्याहवनीयात्मना स्थापितः, पुरोहितस्थानीयो वा असि । मानुषः मन्ता ज्ञाता । अथवा मानुष इति षष्ठी । मानुषस्य स्वभूतेषु यज्ञेष्विति ॥ १० ॥

### वेङ्कटमाधवीयम् ।

अग्ने पूर्वाः । अग्ने! गतास्वप्युषस्सु विभावसो प्राज्वलः सर्वस्य दर्शनीयः । स त्वं ग्रामेष्वसि गृहेषु पुरो निहितो रक्षितारण्येषु च यज्ञेषु पुरो निहितो मनुष्यहितः ॥ १० ॥

**इति प्रथमस्य तृतीये एकोनत्रिंशो वर्गः ।**

---

१. 'भाः' ख. पाठः.

**नित्वायज्ञस्यसाधनमग्नेहोतारमृत्विजम्।**

**मनुष्वद्देवधीमहिप्रचेतसंजीरंदूतममर्त्यम्॥ ११॥**

नि। त्वा। यज्ञस्य। साधनम्। अग्ने। होतारम्। ऋत्विजम्। मनुष्वत्। देव। धीमहि। प्रऽचेतसम्। जीरम्। दूतम्। अमर्त्यम्॥ ११॥

## स्कन्दस्वामीयम्।

त्वां यज्ञस्य साधनं साधयितारम्। हे अग्ने! होत्राख्यमृत्विजम्। मनुष्वन्मनुष्यवत्। देव! (नि)धीमहि (नि)दध्महे। यज्ञे स्थापयाम इत्यर्थः। प्रचेतसम्। जीरं क्षिप्रनामैतत्। क्षिप्रम्। दूतममर्त्यम्॥ ११॥

## वेङ्कटमाधवीयम्।

नि त्वा यज्ञस्य। निधीमहि त्वां यथा मनुर्निदधे क्षिप्रं तद्वदिति॥ ११॥

**यद्देवानांमित्रमहःपुरोहितोन्तरोयासिदूत्यम्।**

**सिन्धोरिवप्रस्वनितासऊर्मयोग्नेर्भ्राजन्तेअर्चयः॥ १२॥**

यत्। देवानाम्। मित्रऽमहः। पुरःऽहितः। अन्तरः। यासि। दूत्यम्। सिन्धोःऽइव। प्रऽस्वनितासः। ऊर्मयः। अग्नेः। भ्राजन्ते। अर्चयः॥ १२॥

## स्कन्दस्वामीयम्।

यत् यदा देवानां हे मित्रमहः! मित्राणां पूजयितः! पूज्यो वा। पुरोहितः पूर्वस्यां दिश्याहवनीयात्मना स्थापितः। अन्तरः सन्निकृष्टः। कस्य। सामर्थ्याद् देवानां यजमानानां वा। यासि दूत्यं दूतकर्म। आहवनीयमास्थाय देवानां दूतकर्म करोषीत्यर्थः। यदेति वचनात् तदेत्यध्याहा-

र्यम् । तदा । सिन्धोरिव प्रस्वनितास ऊर्मयः । प्रकृष्टं स्वनितं येषां ते प्रस्वनितासः शब्दवन्त इत्यर्थः । यथा सिन्धोर्नद्याः महान्तः शब्दवन्त ऊर्मयो भ्राजेरन्, तद्वत् तवाग्नेर्भ्राजन्ते अर्चयो ज्वालाः ॥ १२ ॥

### वेङ्कटमाधवीयम् ।

यद् देवानाम् । यद् देवानां मित्राणां पूजयितः! मनुष्यैः पुरोहितो देवानां मनुष्याणां मध्ये वर्तमानो यासि दूत्यम् । तदानीं समुद्रस्येव प्रकृष्टशब्दा वीचयस्तवाग्नेर्भ्राजन्ते दीप्तयः ॥ १२ ॥

**श्रुधिश्रुत्कर्णवह्निभिर्देवैरग्नेसयावभिः ।**
**आसीदन्तुबर्हिषिमित्रोअर्यमाप्रातर्यावाणोअध्वरम्**

[ ॥ १३ ॥

श्रुधि । श्रुत्ऽकर्ण । वह्निऽभिः । देवैः । अग्ने । सयावऽभिः । आ सीदन्तु । बर्हिषि । मित्रः । अर्यमा । प्रातःऽयावानः । अध्वरम् ॥ १३ ॥

### स्कन्दस्वामीयम् ।

श्रुधि शृणु । श्रुत्कर्ण! श्रोतृकर्ण!। वह्निभिः हविषां वोढृभिरन्यैरग्निभिः सह । कीदृशैः । देवैः दानादिगुणैः । हे अग्ने! । सयावभिः । हव्यं गृहीत्वा त्वया सह ये यान्ति ते सयावानः । तैः सयावभिः । किं शृणवानि । उच्यते । त्वया हुताः सन्तः आसीदन्तु बर्हिषि मित्रो अर्यमा अन्ये च प्रातर्यावाणः प्रातर्गामिनो देवाः । अध्वरम् । सप्तम्यर्थेऽत्र द्वितीया । बर्हिषीत्यस्य चेदं विशेषणम् । अस्मदीयेऽध्वरे यद् बर्हिस्तत्र ॥ १३ ॥

### वेङ्कटमाधवीयम् ।

श्रुधि श्रुत्कर्ण ! शृणु श्रवणपरकर्ण ! हविषां वोढृभिरन्यैस्त्वया सहैकगमनैर्यज्ञं च प्रातर्गच्छद्भिरस्मिन् बर्हिष्यासीदन्तु मित्रोऽर्यमा चेति ॥ १३ ॥

त्वयैव चाहूताः —

**शृण्वन्तुस्तोमंमरुतःसुदानवोग्निजिह्वाऋतावृधः ।**
**पिबतुसोमंवरुणोधृतव्रतोश्विभ्यामुषसासजूः ॥ १४ ॥**

शृण्वन्तु । स्तोमम् । मरुतः । सुऽदानवः । अग्निऽजिह्वाः । ऋतऽवृधः । पिबतु । सोमम् । वरुणः । धृतऽव्रतः । अश्विऽभ्याम् । उषसा । सऽजूः ॥ १४ ॥

## स्कन्दस्वामीयम् ।

शृण्वन्तु स्तोमं मरुतः । सुदानवः शोभनदातारः शोभनदाना वा । अग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः । सर्वेषामेव देवानामग्निर्जिह्वास्थानीयः । ऋतावृधः यज्ञस्य वर्धयितारः । पिबतु सोमं वरुणो धृतव्रतः धृतकर्मा अपरित्यक्तस्वव्यापारः अश्विभ्यामुषसा च । सजूः सह प्रीयमाणः ॥ १४ ॥

## वेङ्कटमाधवीयम् ।

शृण्वन्तु स्तोमम् । त्वया हूयमानाः शृण्वन्तु स्तोमं मरुतः शोभनदाना अग्न्यास्या यज्ञस्य वर्धयितारः । पिबतु च सोमं वरुणो धृतकर्माश्विभ्यामुषसा च सहितः ॥ १४ ॥

इति प्रथमस्य तृतीये त्रिंशो वर्गः ॥

---

**त्वमग्नेवसूँरिहरुद्राँआदित्याँउत ।**
**यजास्वध्वरंजनंमनुजातंघृतप्रुषम् ॥ १ ॥**

त्वम् । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत । यज । सुऽअध्वरम् । जनम् । मनुऽजातम् । घृतऽप्रुषम् ॥ १ ॥

---

१. 'ह व्याप्ति' ग. पाठः.

## स्कन्दस्वामीयम् ।

त्वं, हे अग्ने! । वसून् देवान् । इहास्मदीये यज्ञे । रुद्रानप्यादित्यानपि यज । अन्यञ्च स्वध्वरं सुयज्ञं देवजनं, मनुजातं मनोः प्रजापतेः सकाशाज्जातम् । घृतप्रुषम् । घृतमित्युदकनाम । प्रुषिः क्षरणार्थः । उदकस्य क्षरितारं वर्षितारमित्यर्थः । अथवा आहुतिलक्षणं घृतं प्रतिक्षरति घृतप्रुट् । तं घृतप्रुषम् । सर्वयजनानामाज्याहुतिभिर्यष्टव्यमित्यर्थः ॥ १ ॥

### वेङ्कटमाधवीयम् ।

त्वमग्ने वसून् । त्वमग्नेऽस्मिन् यज्ञे वस्वादीन् यज । तद्व्यतिरिक्तमपि दैव्यं जनं सुयज्ञं मनुष्येषु प्रादुर्भवन्तं घृतं प्रति गन्तारम् ॥ १ ॥

**श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः ।**

**तान्रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥ २ ॥**

श्रुष्टीऽवानः । हि । दाशुषे । देवाः । अग्ने । विऽचेतसः । तान् । रोहित्ऽअश्व । गिर्वणः । त्रयःऽत्रिंशतम् । आ । वह ॥ २ ॥

## स्कन्दस्वामीयम् ।

हिशब्दः पदपूरणः । तान् रोहिदश्वेति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । दाशुषे यजमानस्यार्थाय । श्रुष्टीवानः । श्रुष्टीति क्षिप्रनाम । 'वन षण सम्भक्तौ' । क्षिप्रं यजमानं[२] सम्भक्तारः । अथवा श्रुष्टिशब्दोऽत्र श्रुतवचनः । श्रुतवन्तः श्रुष्टीवानः । बहुश्रुता इत्यर्थः । देवाः (हे! ये) देवाः । अग्ने! विचेतसः विविधप्रज्ञाः ऊहापोहसमर्थाः । तान् । रोहिदश्व! । रोहितवर्णा अश्वा यस्य स रोहिदश्वः तस्य सम्बोधनं हे रोहिदश्व! । गिर्वणः! स्तुतिभिः सम्भजनीय!, स्तुतीनां वा सम्भक्तयितः । त्रयस्त्रिंशतमावह । अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिश्च वषट्कारश्चेत्येते त्रयस्त्रिंशद्देवाः, तांस्त्रयस्त्रिंशतमावह ॥ २ ॥

### वेङ्कटमाधवीयम् ।

श्रुष्टीवानो हि । क्षिप्रसम्भक्तारो हि दाशुषे देवा अग्ने! सुमतयस्तान् रोहिदश्व! गीर्भिर्वननीयेहावह त्रयस्त्रिंशत्सङ्ख्याकान् ॥ २ ॥

---

१. 'बयज' क. पाठः. २. 'मानं स' ख. पाठः.

**प्रियमेधवदत्रिवज्जातवेदोविरूपवत् ।**

**अङ्गिरस्वन्महिव्रतप्रस्कण्वस्यश्रुधीहवम् ॥ ३ ॥**

प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः । विरूपऽवत् । अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ॥ ३ ॥

### स्कन्दस्वामीयम् ।

प्रियमेधवत् प्रियमेधस्येव । अत्रिवत् अत्रेरिव । हे जातवेदः! जातप्रज्ञाग्ने! । विरूपस्येव चाङ्गिरस इव । हे महिव्रत! महाकर्मन्! । मम प्रस्कण्वस्य श्रुधि हवम् ॥ ३ ॥

### वेङ्कटमाधवीयम् ।

प्रियमेधवत् । प्रियमेधादिचतुष्कस्येव महाकर्मन्! प्रस्कण्वस्यापि शृणु ह्वानमिति ॥ ३ ॥

**महिकेरवऊतयेप्रियमेधाअहूषत ।**

**राजन्तमध्वराणामग्निंशुक्रेणशोचिषा ॥ ४ ॥**

महिऽकेरवः । ऊतये । प्रियऽमेधाः । अहूषत । राजन्तम् । अध्वराणाम् । अग्निम् । शुक्रेण । शोचिषा ॥ ४ ॥

### स्कन्दस्वामीयम् ।

महिकेरवो महतः स्तोमस्य कर्तारः । ऊतये पालनाय । तर्पणाय वात्मनः । प्रियमेधाः प्रिययज्ञाः । अहूषत आहूतवन्तः । आह्वयन्ति वा । राजन्तम् । राजतिरैश्वर्यकर्मा । ईशानम् । अध्वराणां यज्ञानाम् । अग्निम् । शुक्रेण शोचिषा । इत्थंभूतलक्षणे एषा तृतीया । शुक्लवर्णया दीप्त्या सम्बद्धम् । शुक्लवर्णया दीप्त्या दीप्तमित्यर्थः । अथवा शुक्रेण शोचिषेत्येतद् राजन्तमध्वराणामित्येतेन सम्बध्यते । राजतिश्च दीप्त्यर्थः । शुक्रेण शोचिषा राजन्तं दीप्यमानम् । क । अध्वराणाम् । षष्ठीनिर्देशान्मध्य इति वाक्यशेषः । यज्ञानां मध्ये वेदिस्थमित्यर्थः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

महिकेरवः । महाकर्माणि ऊतये प्रियमेधास्त्वामह्वूषतेशानं यज्ञानामग्निं शुक्रेण तेजसा ॥ ४ ॥

घृताहवनसन्त्येमाउषुश्रुधीगिरः ।
याभिःकण्वस्यसूनवोहवन्तेवसेत्वा ॥ ५ ॥

घृतऽआहवन । सन्त्य । इमाः । ऊम् इति । सु । श्रुधि । गिरः । याभिः । कण्वस्य । सूनवः । हवन्ते । अवसे । त्वा ॥ ५ ॥

स्कन्दस्वामीयम् ।

घृतमाहूयते यस्मिन् स घृताहवनः । तस्य सम्बोधनं हे घृताहवन! । सन्त्य! । 'षणु दाने' दातः! । इमा उषु । उ(षु?)शब्दः पदपूरणः । सुष्ठु । श्रुधि गिरः । याभिः कण्वस्य सूनवः पुत्रा हवन्ते । आत्मन एव वायमपरोक्षरूपेण निर्देशः । वयं कण्वपुत्रा आह्वयाम इत्यर्थः । अवसे पालनाय तर्पणाय वा । त्वाम् ॥ ५ ॥

वेङ्कटमाधवीयम् ।

घृताहवन । प्रियघृतहविष्क! भजनशीलेमाः स्तुतीः श्रृणु । याभिः कण्वपुत्रा रक्षणाय त्वां हवन्ते ॥ ५ ॥

इति प्रथमस्य तृतीये एकत्रिंशो वर्गः ॥

---

त्वांचित्रश्रवस्तमहवन्तेविक्षुजन्तवः ।
शोचिष्केशंपुरुप्रियाग्नेहव्यायवोह्ळवे ॥ ६ ॥

त्वाम् । चित्रश्रवःऽतम । हवन्ते । विक्षु । जन्तवः । शोचिःऽकेशम् । पुरुऽप्रिय । अग्ने । हव्याय । वोह्ळवे ॥ ६ ॥

स्कन्दस्वामीयम् ।

त्वां हे चित्रश्रवस्तम! अतिशयेन पूज्यं चित्रं (श्र)(वा ? वः) अन्नं वा धनं वा यशो वा यस्य स चित्रश्रवस्तमः । तस्य सम्बोधनं हे चित्रश्रवस्तम! । हवन्ते । विक्षु मनुष्यनामैतत् । तेन तल्लोका अत्र लक्ष्यन्ते । मनुष्यलोकेषु । जन्तवो मनुष्याः । कीदृशम् । शोचिष्केशम् । शोचिर्दीप्तिर्ज्वालाख्या । सा केशस्थानीया यस्य स शोचिष्केशः । तं शोचिष्केशम् । हे पुरुप्रिय! अग्ने । किमर्थम् । हव्याय वोह्ळवे हवींषि वोढुम् ॥ ६ ॥

वेङ्कटमाधवीयम् ।

त्वां चित्रश्रवस्तम । चित्रश्रवसः श्रुतेन योऽतिशेते तं त्वां स्तुतिभिर्मनुष्येषु जाता हवन्ते ज्वालाकेशं बहुप्रियाग्ने ! हविषो वहनाय ॥ ६ ॥

**नित्वाहोतारमृत्विजंदधिरेवसुवित्तमम् ।**

**श्रुत्कर्णंसप्रथस्तमंविप्राअग्नेदिविष्टिषु ॥ ७ ॥**

नि । त्वा । होतारम् । ऋत्विजम् । दधिरे । वसुवित्ऽतमम् । श्रुत्ऽकर्णम् । सप्रथःऽतमम् । विप्राः । अग्ने । दिविष्टिषु ॥ ७ ॥

स्कन्दस्वामीयम् ।

नि त्वा होतारमृत्विजं दधिरे दधति स्थापयन्ति । वसुवित्तमं धनानां लब्धृतमम् । श्रुत्कर्णं (श्रुति ?)श्रवणशीलकर्णम् । सप्रथस्तमम् “आर्चन्नत्र मरुतः सस्मिन्नाजा”वित्यादिदर्शनाद् सशब्दः सर्वपर्यायः । सर्वतः पृथुः सप्रथाः । अतिशयेन सर्वतः पृथुं सप्रथस्तमम् । विप्राः मेधाविनः । हे अग्ने! दिविष्टिषु । दिवमिष्यते याभिर्गन्तुं ता दिविष्टयः । तासु । यागेष्वित्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

नि त्वा होतारम् । निदधिरे त्वां होतारमृत्विजमतिशयेन धनानां लम्भयितारं श्रुत्कर्णं सर्वतः पृथुतमं मेधाविनोऽग्ने ! दिवसागमनेष्वहर्मुखेषु ॥ ७ ॥

**आत्वाविप्राअचुच्यवुःसुतसोमाअभिप्रयः ।**

**बृहद्भाबिभ्रतोहविरग्नेमर्तायदाशुषे ॥ ८ ॥**

आ । त्वा । विप्राः । अचुच्यवुः । सुतऽसोमाः । अभि । प्रयः । बृहत् । भाः । बिभ्रतः । हविः । अग्ने । मर्ताय । दाशुषे ॥ ८ ॥

### स्कन्दस्वामीयम् ।

आ त्वा विप्राः मेधाविनः ऋत्विजः । अचुच्यवुः आच्यावयन्ति । आह्वयन्तीत्यर्थः । सुतसोमाः कृतसोमाभिषवाः । अभि प्रयः सोमलक्षणमन्नं प्रति । बृहद्भाः । बृहती भा दीप्तिर्यस्य तत् बृहद्भाः दीप्त्यात्यन्तदीप्तम् । बिभ्रतः धारयन्तः, सोमलक्षणं हविः । हे अग्ने! मर्ताय दाशुषे । मनुष्यस्य यजमानस्यार्थाय ॥ ८ ॥

### वेङ्कटमाधवीयम् ।

आ त्वा विप्राः । आगमयन्ति । त्वामभिषुतसोमा मेधाविनः सोमलक्षणमन्नमभि बृहतीर्दीप्तीर्हविश्च धारयन्तोऽग्ने ! मर्ताय यजमानाय होतारः ॥ ८ ॥

प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य ।
इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥ ९ ॥

प्रातःऽयाव्नः । सहःऽकृत । सोमऽपेयाय । सन्त्य । इह । अद्य । दैव्यम् । जनम् । बर्हिः । आ । सादय । वसो इति ॥ ९ ॥

### स्कन्दस्वामीयम् ।

प्रातर्ये यज्ञान् प्रति गच्छन्ति ते देवाः (तान्) प्रातर्याव्णः । हे सहस्कृत सहसा कृत! बलादुत्पादित! । प्राणाद्धि बलान्मथ्यमानोऽयं जायते । तेनैवमामन्त्र्यते सहस्कृतेति । सोमपेयाय सोमपानार्थम् । हे सन्त्य! । 'षणु दाने' । दातः! । इहास्मदीये यज्ञे । अद्य । दैव्यं जनं देवजनं चाप्यन्य(द ? म)पि ये च प्रातर्यावाणो देवाः, ये च इतरे देवाः, सर्वांस्तानित्यर्थः । बर्हिरासादय हे वसो! प्रशस्य! धनवन्! वा ॥ ९ ॥

### वेङ्कटमाधवीयम् ।

प्रातर्याव्णः । प्रातर्याव्णो देवान् मथनबलेन कृत सोमपानार्थं भजनीयास्मिन् यज्ञे बर्हिरासादय दैव्यं जनं वासयितः । पूर्वार्धस्य संग्रह उत्तरः ॥ ९ ॥

अर्वाञ्चं दैव्यंजनमग्नेयक्ष्वसहूतिभिः।
अयंसोमःसुदानवस्तंपाततिरोअह्न्यम् ॥ १० ॥

अर्वाञ्चम्। दैव्यम्। जनम्। अग्ने। यक्ष्व। सहूतिऽभिः।
अयम्। सोमः। सुऽदानवः। तम्। पात। तिरःऽअह्न्यम् ॥ १० ॥

स्कन्दस्वामीयम्।

अर्वाञ्चमिति कर्मश्रुतेर्योग्यक्रियाध्याहारः। अर्वाञ्चमस्मदभिमुखं आहूय। दैव्यं जनं हे अग्ने! यक्ष्व यज। कथमाहूय। सहूतिभिः सहाह्वानैः, युगपदाहूयेत्यर्थः। अथवा सहह्वातारः सहूतयः। सहयोगलक्षणे चैषा तृतीया। सहाह्वातृभिरन्यैरग्निभिः सहाहूयेत्यर्थः। अयं सोमः हे सुदानवः। 'अर्धर्चो देवदेवत्यः'। अयं सोम इत्ययमर्धर्चो देवदेवत्यः प्रत्येतव्यः। अयं सोमः। हे सुदानवः! शोभनदातारः! तं पात पिबत। तिरोअह्न्यम्। तार्तीयसावनिकः सोमविशेषः तिरोअह्न्य उच्यते, तं तिरोअह्न्यम्। अथवा तिरः सत इति प्राप्तस्य नामनी। प्राप्ते वर्तमाने यागाहे भवः तिरोअह्न्यः। तं तिरोअह्न्यमिति ॥ १० ॥

वेङ्कटमाधवीयम्।

अर्वाञ्चं दैव्यम्। अस्मदभिमुखं दैव्यं जनमग्ने! यज समानाह्वानैस्तत्तदनुचरैः सह। अथ देवानाह—अयं सोमोऽभिषुतः शोभनदानाः! तं पिबत पूर्वस्मिन्नहनि तिरोभूते जातमथवा प्राप्तेऽहनि प्रादुर्भूतमिति ॥ १० ॥

इति प्रथमस्य तृतीये द्वात्रिंशो वर्गः।

---

एषोउषाअपूर्व्याव्युच्छतिप्रियादिवः।
स्तुषेवामश्विनाबृहत् ॥ १ ॥

एषो इति। उषाः। अपूर्व्या। वि। उच्छति। प्रिया। दिवः।
स्तुषे। वाम्। अश्विना। बृहत् ॥ १ ॥

स्कन्दस्वामीयम्।

एषो आश्विनमुत्तमम्। एषो उषा इत्येतदाश्विनं सूक्तम् अध्यायस्योत्तमम्। एषो उषाः अपूर्व्या। यतः पूर्वः अन्यो नास्ति सा अपूर्वा, सर्व-

प्रथमेत्यर्थः । अपूर्वैव अपूर्व्या । स्वार्थिको यत्प्रत्ययः । व्युच्छति विवासयति । तमांसि विवासयति, उदितेत्यर्थः । प्रिया दिवः । अत्यन्तसाहचर्यादुषसः । दिवः प्रियोषा इत्याभिधीयते । एतदुक्तं भवति—उदितेयमुषाः । उषउदय-कालश्चाश्विनोः स्तुतिकालः । अतः स्तुषे । व्यत्ययेनायमुत्तमस्य स्थाने मध्यमः । स्तुषे स्तौमि । वां युवां हे अश्विनौ! बृहन्महत् सुष्टुवित्यर्थः ॥ १ ॥

### वेङ्कटमाधवीयम् ।

एषो उषाः । यतः पूर्वमन्यो न प्रादुर्भवति सैषापूर्व्या प्रादुर्भवति । दिवो दुहि-तृत्वात् प्रिया । तत्राहं बृहता स्तोत्रेण वामश्विनौ! स्तौमि भवतोः काले ॥ १ ॥

यौ कीदृशावत उच्यते—

**यादस्रासिन्धुमातरामनोतरारयीणाम् ।**
**धियादेवावसुविदा ॥ २ ॥**

**या । दस्रा । सिन्धुऽमातरा । मनोतरा । रयीणाम् । धिया । देवा । वसुऽविदा ॥ २ ॥**

### स्कन्दस्वामीयम् ।

या दस्रा यौ दस्रौ दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा-नासत्यनामापरः, तथापि साहचर्यादन्यतरनाम्नापि सर्वत्र उभयोर्व्यपदेशः । अथवा 'दसि दंशदर्शनयोः' । दर्शनीयौ । अथवा 'दसु उपक्षये' । शत्रूणा-मुपक्षयितारौ । सिन्धुमातरा । सिन्धवो नद्यस्तासां वृष्टिद्वारेण मातरौ निर्मा-तारौ । मनोतरा 'मन ज्ञाने' । ज्ञातृतरौ । कस्य । रयीणां धनानाम् । (अथवा) मनोतराविति मन्मह इत्यस्य याच्ञाकर्मणो रूपम् । याचितारौ हविर्लक्षणानां धनानाम् । अथवा (याच्ञ)या तत्र पूर्वं दानं लक्ष्यते । दातृतरौ धनानामित्यर्थः । धिया देवा वसुविदा । धियेत्येतद् वसुविदेत्येतेन सम्बध्यते । प्रज्ञया धनानां लब्धारौ । देवा देवौ दानादिगुणौ ॥ २ ॥

### वेङ्कटमाधवीयम् ।

या दस्रा । यौ दर्शनीयौ नदीनां निर्मातारौ धनानामनुमन्तारौ कर्मणा देवौ वसूनां लम्भयितारौ स्तौमि ॥ २ ॥

---

१. 'वा पू' क. पाठः.

**वच्यन्तेवांककुहासोजूर्णायामधिविष्टपि।**
**यद्वांरथोविभिष्पतात्॥ ३॥**

**वच्यन्ते। वाम्। ककुहासः। जूर्णायाम्। अधि। विष्टपि। यत्। वाम्। रथः। विऽभिः। पतात्॥ ३॥**

### स्कन्दस्वामीयम्।

वच्यन्ते। वच्यतिर्गत्यर्थः। गच्छन्ति। वां युवयोः स्वभूताः ककुहासः। ककुह इति महन्नाम। महान्तोऽश्वाः। जूर्णायामधिविष्टपि। आदिसृष्टावुत्पन्नत्वादत्यन्तचिरन्तनी द्यौः जूर्णेत्युच्यते। अधीत्युपरिभावे। विष्टपीति दिवोऽभिधेयम्। जूर्णाया दिव उपरि। यद् यदा। वां युवयोः स्वभूतः। रथः विभिः पक्षिसदृशैरश्वैः। पतात् पतति॥ ३॥

### वेङ्कटमाधवीयम्।

वच्यन्ते वाम्। उच्यन्ते युवयोः स्तोत्राणि जीर्णायां रात्रावपररात्रे विष्टब् रात्रिः, विष्टम्भनात्। यस्मिन् काले युवयो रथोऽश्वैः पतति॥ ३॥

**हविषाजारोअपांपिपर्तिपपुरिर्नरा।**
**पिताकुटस्यचर्षणिः॥ ४॥**

**हविषा। जारः। अपाम्। पिपर्ति। पपुरिः। नरा। पिता। कुटस्य। चर्षणिः॥ ४॥**

### स्कन्दस्वामीयम्।

हविषा सोमलक्षणेन, जारो जरयिता। कस्य। अपाम्। कोऽसौ। अग्निः। कुत एतत्। हविषाश्विनोः पूरणवचनाद्, अपां च जरयितृत्वात्[1]। इह हविषा पिपर्ति पपुरिरिति हविषाश्विनोः पूरणमुच्यते। होतृत्वाच्च हविषां देवतापूरणमग्नेः कर्म, नान्यस्य। अपां जरयिताग्निः। कथम्। जाठरावस्थ-

1. 'भोक्तृत्वा' ख. पाठः.

स्तावद् अशितपीतं जरयंस्तदन्तर्गता अपो जरयति, बाह्योऽपि सन्तापयन्नपो जरयतीत्यतोऽग्निर्भवत्यपां जारः। अथवापामित्येतत् हविषेत्यनेन सम्बध्यते। वसतीवर्यैकधनालक्षणानामपां सम्बन्धिना सोमलक्षणेन। वसतीवर्यैकधनामिश्रेण सोमेनेत्यर्थः। जारः आहारस्य जरयिताग्निः। पिपर्ति। 'पॄ पालनपूरणयोः'। पूरयति। कम्। प्रकरणाद् युवामश्विनौ। बहुसोमं युवाभ्यामश्विभ्यां ददातीत्यर्थः। कीदृशोऽग्निः। उच्यते। पपुरिः पूरयिता सोमेन देवानाम्। होतृत्वाद्धि सर्वदेवानामग्निः सोमेन पूरयिता। हे नरा! मनुष्याकारौ! अश्विनौ!। (पिता कुटस्य?) पिता पालयिता यज्ञस्य, कृत्स्नस्य वा जगतः। कुटस्य चर्षणिः। 'कुट कौटिल्ये' इत्यस्य, कुटः यज्ञविभ्रंश उच्यते। स हि श्रुतिविहितमार्गादपेतः। तस्य चर्षणिः द्रष्टा। अथवा कुटिलचित्तः कुटः शठः पुमान्। तस्य द्रष्टा। भक्ताभक्तयोः पुंसोर्विशेषज्ञ इत्यर्थः। अथवा कुटशब्दः कृतशब्दपर्यायः। कृतस्य पुण्यस्य पापस्य च द्रष्टा। यास्कस्तु "जारो अपा"मित्यादिभिरादित्य उच्यत इति मन्यते। एवं ह्याह—"पिता कुटस्य कर्मणश्च पालयितादित्य इति। तदनुपपन्नम्। ह(विः?विषा) पिपर्ति पपुरिरिति सोमलक्षणेन हविषाश्विपूरणस्यादित्ये असम्भवात्। होतृत्वाद्धि हविषां देवतापूरणमग्नेः कर्म, नादित्यस्य। स्यादेतत्—हविरित्युदकनाम। हविषोदकेन जारोऽपामादित्यः पिपर्तीति। तन्नोपपद्यते। वृष्टिकर्मणो (ऽप्या?ह्या)दित्येऽसम्भवात्। रसानुप्रदानान्मध्यमस्य। अनाश्विनत्वप्रसङ्गाच्च। हविषोदकेनापां जार इत्यादिगुणयुक्तः आदित्यः पिपर्त्तीत्यादित्यव्यापारप्रधानत्वादस्या ऋचः सत्यपि नरेत्यश्विनोः सम्बोधने, अथापि प्रत्यक्षकृता इह स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानीत्येवमादित्यदेवतेयमृक् प्राप्नोति नाश्विनी। आश्विनं चैतत् सूक्तम्। न च यथाग्न्यभिधानपक्षे "सोमलक्षणेन हविषा अग्निः हे नरौ! युवां पूरयती"त्येवमश्विनोः प्राधान्याश्रयणादाश्विनत्वम्, एवमादित्याभिधाने सम्भवत्युदकेनाश्विनोः पूर्यमाण(त्वात्?त्वम्)। आदित्यो हि मध्यमं वोदकेन पूरयेत् भूमिं वा, नाश्विनौ। तस्माद् यथाव्याख्यातम्, अपां जार इत्यादिभिरग्निरेवोच्यते, नादित्य इत्यपोह्यमेतद् यास्कवचनम्॥ ४॥

## वेङ्कटमाधवीयम्।

हविषा जारः। हविषापां जरयिता तेजसा द्यावापृथिवीनेतारौ! पूरयति पूरयिता कृतस्य कर्मणः पालयिता द्रष्टादित्यस्तत्र वां स्तौमीति॥ ४॥

किमेतावन्मात्रगुण एवाग्निः । नेत्युच्यते । किन्तर्हि—

**आदारोवांमतीनांनासत्यामतवचसा ।**
**पातंसोमस्यधृष्णुया ॥ ५ ॥**

**आऽदारः । वाम् । मतीनाम् । नासत्या । मतऽवचसा पातम् । सोमस्य । धृष्णुऽया ॥ ५ ॥ ३२ ॥**

### स्कन्दस्वामीयम् ।

आदारो वाम् । आदार इति ण्यन्तस्याद्रियते रूपम् । वां मतीनामिति मन्यतेरर्चतिकर्मणः । मतयः स्तुतय इहोच्यन्ते । षष्ठी 'कर्तृकर्मणोः कृति' (२-३-६५) इत्येवं कर्मणि द्रष्टव्या । प्रकृत्यर्थस्य चेदमादरणस्य कर्म ण्यन्तस्य । ओदनपाचयितेति यथा । आदरयिता युवयोः स्तुतीनाम् । युष्मत्स्तुतीराद्रियमाणानामृत्विजां प्रयोजक इत्यर्थः । अग्निर्हि दैव्यो होता । तदधिष्ठितास्तु मानुषाः स्तुवन्तीत्यग्नेः स्तुतीराद्रियमाणान् ऋत्विजः प्रति प्रयोजकत्वम् । अथवा आदार इति तस्यैव चाद्रियते रूपम् । वां मतीनामित्यपि मतयो[1] (बुद्धयः) । आदरिता युवयोर्बुद्धीनाम् । अत्यन्तं युष्मत्परिचर्यापरत्वाद् यद् युवां मनसा चिन्तयथः, तस्याप्यादरितेत्यर्थः । हे नासत्या! नासत्यनामानौ! । अथवा न असत्यौ । द्वौ प्रतिषेधौ प्रकृतिं गमयतः । सत्यावेव । मतवचसा(भिमत) वचनेन । एवंरूपोऽग्निरावां सोमेन पूरयतीत्येतज्ज्ञात्वा पातं पिबतम् । सोमस्य सोमं सोमस्य वैकदेशं स्वांशलक्षणम् । धृष्णुया । प्रथमाया अयं यादेशः । क्रियाविशेषणं चैतद् द्रष्टव्यम् । धृष्णुया धृष्टं प्रगल्भम् । निश्शङ्कौ सर्वलोकप्रकाशं पिबतमित्यर्थः ॥ ५ ॥

### वेङ्कटमाधवीयम् ।

आदारो वाम् । तीव्रत्वादादारकौ युवयोर्बुद्धीनां सोमो नासत्यौ! प्रियस्तोत्रौ! । तं सोमं पिबतं मनसो धर्षणम् ॥ ५ ॥

इति प्रथमस्य तृतीये त्रयस्त्रिंशो वर्गः ।

---

१. 'यो यज्ञनामानि । आ' ग. पाठः.

यानः पीपरदश्विनाज्योतिष्मतीतमस्तिरः ।
तामस्मेरासाथामिषम् ॥ ६ ॥

या । नः । पीपरत् । अश्विना । ज्योतिष्मती । तमः । तिरः । ताम् । अस्मे इति । रासाथाम् । इषम् ॥ ६ ॥

### स्कन्दस्वामीयम् ।

या नोऽस्माकं पीपरत् । 'पॄ पालनपूरणयोरि'त्यस्यैतण्ण्यन्तस्य रूपम् । पालयति रक्षति । हे अश्विनौ! ज्योतिष्मती ज्योतिषां सारवती सर्वलोकप्रकाशा वा । किं पीपरत् । उच्यते । तमस्तिरः । तिरः सत इति प्राप्तस्य नामनी । प्राप्तं मानसं तमः । येनानेन पुत्रदारपोषणाशक्तिप्रतिघातजेन मानसेन व्याप्ताः स .... ... ... स्य येन सर्वेत्यर्थः । अथवा न इति द्वितीया । यास्मान् पीपरत् पूरयति तर्पयतीत्यर्थः । ज्योतिष्मती तमस्तिरः । कर्मोपसर्गश्रुतेर्योग्यक्रियाध्याहारः । तमस्तिरस्करोति । तिरस्कारेण चात्र प्रकाशो लक्ष्यते । सर्वलोकप्रकाशो भवतीत्यर्थः । तामस्मे रासाथामिषम् । रासाथां दत्तम् इषमन्नम् ॥ ६ ॥

### वेङ्कटमाधवीयम् ।

या नः पीपरत् । यदन्नमस्मानुज्ज्वलमश्विनौ! दारिद्र्यलक्षणात् तमसोऽन्यत्र पारयति, तदन्नमस्मभ्यं दत्तम् ॥ ६ ॥

आनोनावामतीनांयातंपारायगन्तवे ।
युञ्जाथामश्विनारथम् ॥ ७ ॥

आ । नः । नावा । मतीनाम् । यातम् । पाराय । गन्तवे । युञ्जाथाम् । अश्विना । रथम् ॥ ७ ॥

### स्कन्दस्वामीयम् ।

नः अस्मान् । नावा आयातम् । किमर्थम् । मतीनां पाराय गन्तवे । पारमन्तम् । 'गत्यर्थकर्मणि—' (२-३-१२) इत्यनेन कर्मणि चतुर्थी ।

'अश्विनावागमिष्यतः । तावागतौ यक्ष्यामहे । ताविष्टौ कामान् नः सम्पादयिष्यत' इत्येवमादिकानामभिलाषलक्षणानामस्मन्मतीनां पारमन्तं गन्तुम् । युष्मदागमनसम्बद्धानस्मदभिलाषान् फलप्राप्तिपर्यन्तान् (साधनान्?) कर्तुमित्यर्थः । फलप्राप्त्यन्ता हि सर्वाभिलाषाः । किञ्चास्मान् प्रत्यागन्तुं युञ्जाथाम् । हे अश्विनौ! रथम् । यत्र नावा गन्तव्यं जले तत्र नावा यातं, यत्र रथेन स्थले तत्र रथेनेत्यर्थः ॥ ७ ॥

### वेङ्कटमाधवीयम् ।

आ नो नावा । आयातमस्माकं भवतोर्नावा स्तोत्राणां पारं गन्तुम् । जलमुत्तीर्याश्विनावागच्छतः । तत ऊर्ध्वं गमनार्थं रथं च युञ्जाथामिति ॥ ७ ॥

**अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः ।**
**धिया युयुज्र इन्दवः ॥ ८ ॥**

अरित्रम् । वाम् । दिवः । पृथु । तीर्थे । सिन्धूनाम् । रथः । धिया । युयुज्रे । इन्दवः ॥ ८ ॥

### स्कन्दस्वामीयम् ।

अर्तिर्गत्यर्थः । गच्छति येन नौः तदि(दरित्रम् ।) अपलवक इत्यपभ्रंशेन नाविकानां प्रसिद्धम् । तद्, वां युवयोः स्वभूतं दिवोऽपि सकाशात् । पृथु विस्तीर्णतरं, तीर्थे उत्तरणप्रदेशे सिन्धूनां नदीनां रथः । जले स्थले च गमनसाधनं युवयोरस्तीत्यर्थः । धिया । धीरिति कर्मनाम । अभिषवादिसंस्कारकर्मणा । युयुज्रे युक्ताः । इन्दवः सोमाः । अभिषवादिभिः संस्कारैः संस्कृता इत्यर्थः । एतज्ज्ञात्वा गमनसाधनानाम् गमनप्रयोजनस्य पिपासितस्य सोमस्य (च) विद्यमानत्वादागच्छतमित्यर्थः ॥ ८ ॥

### वेङ्कटमाधवीयम् ।

अरित्रं वाम् । समुद्रगमनसाधनं जलपात्रं वां[2] दिवोऽपि पृ(थग् ? थु) भवति । अथ जलानामुत्तरणदेशे रथ उपतिष्ठति । कर्मणा नानाविधेन यज्ञे सोमाश्च भवद्भ्यां युज्यन्ते ॥ ८ ॥

---

१. 'नं क' ग. घ. पाठः. २. 'वा' घ पाठः.

दि॒वस्क॑ण्वास॒ इन्द॑वो॒ वसु॒ सिन्धू॑नां प॒दे ।

स्वं व॒व्रिं कुह॑ धित्सथः ॥ ९ ॥

दि॒वः । क॒ण्वा॒सः॒ । इन्द॑वः । वसु॑ । सिन्धू॑नाम् । प॒दे । स्वम् । व॒व्रिम् । कुह॑ । धि॒त्स॒थः॒ ॥ ९ ॥

स्कन्दस्वामीयम् ।

दिव इत्यपादानपञ्चमीनिर्देशाद् योग्यक्रियाध्याहारः । दिव आगतयोरश्विनोः । हे कण्वासः ! मत्पितुः कण्वस्यापत्यभूता मत्पुत्रादयः ! । अथवा कण्वेति मेधाविनाम । मेधाविनः ! ऋत्विजः ! मत्पुत्रादयो वा । इन्दवो वसु सोमं धनम् । धनतया चात्र तद्गतं स्वामित्वं प्रतिपाद्यते । दिव आगतावश्विनौ सोमानां स्वामिनौ भविष्यतः । दिव आगताभ्यामश्विभ्यां वयं सोमं दास्याम इत्यर्थः । क्व । सिन्धूनां पदे । सिन्धवोऽत्र स्यन्दनादाहुतय उच्यन्ते । तासां पदं स्थानं यज्ञः, तत्र । सर्वाहुतीनां स्थानभूते यज्ञ इत्यर्थः । अथवा सिन्धवोऽत्राप उच्यन्ते । "नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदय" इति यथा । तासां पदेऽन्तरिक्षे । पञ्चम्यर्थे सप्तमी । अपां स्थानादन्तरिक्षाद् दिवो वा आगतयोरित्यर्थः । परः पादः प्रत्यक्षकृतो भिन्नं वाक्यम् । हे अश्विनौ ! स्वमात्मीयं वव्रिं रूपं कुह क्व स्थाने । धित्सथः धारयितुमिच्छथः स्वशरीरेण वर्तेथे, येनास्मद्यज्ञानागच्छथ इत्यर्थः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

दिवस्कण्वासः । दिवः पतन्ति हे कण्वाः ! दीप्ता रश्मयो वा । वासकमादित्याख्यं तेजथा(पदां ? पां) स्थाने प्रादुर्भवति । तत्र युवामश्विनौ ! स्वं रूपं कस्मिन् निधातुमिच्छथः ॥ ९ ॥

स्यादेतत्, किमेवमतित्वरितोऽसीति[२], तत आह —

अभू॑दु॒ भा उ॑ अं॒शवे॒ हिर॑ण्यं॒ प्रति॒ सूर्यः॑ ।

व्य॑ख्यज्जि॒ह्वया॑सि॒तः ॥ १० ॥

अभू॑त् । ऊम् इति॑ । भाः । ऊम् इति॑ । अं॒शवे॑ । हिर॑ण्यम् । प्रति॑ । सूर्यः॑ । वि । अ॒ख्य॒त् । जि॒ह्वया॑ । असि॑तः ॥ १० ॥

१. 'मनुपुत्रा', २. 'सि त' ख. पाठः.

## स्कन्दस्वामीयम् ।

अभूदुभाः । उकारावुभावपि पदपूरणौ । भाः प्रभा । कस्य । (अंशवे ।) अंशवो रश्मयः । षष्ठीबहुवचनस्य स्थाने इदं चतुर्थ्येकवचनम् । अंशूनामादित्यरश्मीनाम् । हिरण्यं प्रति सूर्यः । प्रतिशब्दोऽत्र सामर्थ्यादुपमायां द्रष्टव्यः । सूर्योऽपि हिरण्यमिव । सूर्योऽप्युदयाभिमुखीभूत इत्यर्थः । उदयवेलायां हिरण्यसदृशः सूर्यो भवति । हिरण्यसदृशी च भाः । भूय (च? श्च) व्यख्यत् । विविधं प्रकाशितवान् । किम् । सामर्थ्यात् त्रैलोक्यं वा दिशो वा । केन । जिह्वया । जिह्वास्थानीयत्वादत्र जिह्वादित्यदीप्तिरुच्यते । उद्यन् ह्यादित्यो रसानादत्ते जिह्वास्थानीयया दीप्त्येत्यर्थः । असितः । 'षिञ् बन्धन' इत्यस्यैतद् रूपम् । तथाहि वामदेवोऽपि वक्ष्यति 'अनायतोऽनिबद्ध' इति । क्वचिदप्यनिबद्ध इत्यर्थः ॥ १० ॥

### वेङ्कटमाधवीयम् ।

अभूदुभाः । अभूद् दीप्तिः रश्मेरनन्तरमुदयवेलायां हिरण्यं प्रत्यासीत् । सूर्यस्तत्सदृशोऽभवदित्यर्थः । तदनन्तरं जिह्वया ज्वालयाबद्धः प्रकाशयति सर्वं जगत् ॥ १० ॥

**इति प्रथमस्य तृतीये चतुस्त्रिंशो वर्गः ॥**

---

किञ्च —

**अभूदु पारमेतवे पन्था ऋतस्य साधुया ।**
**अदर्शि वि स्रुतिर्दिवः ॥ ११ ॥**

अभूत् । ऊम् इति । पारम् । एतवे । पन्थाः । ऋतस्य । साधुऽया । अदर्शि । वि । स्रुतिः । दिवः ॥ ११ ॥

## स्कन्दस्वामीयम् ।

अभूदुपारम् । एतवे गन्तुम् । पन्थाः । पथिस्थानीयत्वादापतत्यनेन यज्ञ इति वा पन्थाः । अहरत्राभिप्रेतः । अहरपि प्रवृत्तमित्यर्थः । कस्य पारमेतवे । ऋतस्य यज्ञस्य । कीदृशमहः । साधुया । साधु शोभनम् । कथं ज्ञायते ।

---

१, 'नू' घ. पाठः ·

यतः अदर्शि विविधं स्तुतिः (दृश्य)ते सूर्यालोकस्य । एतदुक्तं भवति — अभूत् प्रभादित्यरश्मीनां, सूर्योऽपि हिरण्यसदृशः उदयाभिमुखोऽभूत्, यज्ञपरिसमाप्त्यर्थमहरपि प्रवृत्तमतः परं भवतोर्यागकालोऽतिवर्तते । तेन त्वरमाणो ब्रवीमि । स्वं वर्त्रिं कुरुत धित्सथः, येनास्मद्यज्ञं नागच्छथ इत्यर्थः ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अभूदुपारम् । अपरां[1] दिशं प्रति गन्तुमुद्युक्तस्यादित्यस्य साधुरभवत् पन्था दिवो मध्यं कश्चन मार्गोऽप्यदर्शि, येन सूर्यं गच्छति ॥ ११ ॥

तत्त॒दिद॒श्विनो॒रवो॑ जरि॒ता प्रति॑ भूषति ।
म॒दे सोम॑स्य॒ पिप्र॑तोः ॥ १२ ॥

तत्ऽतत् । इत् । अ॒श्विनोः॑ । अवः॑ । ज॒रि॒ता । प्रति॑ । भू॒ष॒ति॒ ।
म॒दे । सोम॑स्य । पिप्र॑तोः ॥ १२ ॥

स्कन्दस्वामीयम् ।

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । प्रतीत्ययं च कर्मप्रवचनीयः, अव इत्येतेन सम्बन्धयितव्यः । यद्यदुत्कृष्टं तत्तदश्विनोरवः पालनं प्रति जरिता स्तोता भूषति भवति । मदे सोमस्य सोममदे सति । सोमेन मत्तयोः सतोरित्यर्थः । पिप्रतोः पूरयतोः । कम् । सामर्थ्यात् स्तोतारमेव । एतदुक्तं भवति — यदीयेन सोमेनाश्विनौ आत्मानं तर्पयतः, तं यद् यदुत्कृष्टं पालनं तेन तेन पालयत इति ॥ १२ ॥

वेङ्कटमाधवीयम् ।

तत्तदित् । उपासितं तत्तदेवाश्विनोरभिलाषयम् रक्षणं स्तोताऽलङ्करोति प्रकाशयति यद् रक्षणं सोमस्य मदे पूरयतोरभूदिति ॥ १२ ॥

वा॒व॒सा॒ना वि॒वस्व॑ति॒ सोम॑स्य पी॒त्या गि॒रा ।
म॒नु॒ष्वच्छं॑भू॒ आ ग॑तम् ॥ १३ ॥

वा॒व॒सा॒ना । वि॒वस्व॑ति । सोम॑स्य । पी॒त्या । गि॒रा । म॒नु॒ष्वत् ।
शं॑भू॒ इति॒ शम्ऽभू । आ । ग॒त॒म् ॥ १३ ॥

---

1. 'द्य' घ. पाठः.

## स्कन्दस्वामीयम् ।

वावसाना । नेदमामन्त्रितम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकतां नेयम् । येन युवां वावसाना । ताच्छील्येऽयं चानश् अत्यर्थवसनशीलौ व्यवस्थानशीलौ । क । विवस्वति । यजमाननामधेयमतत् शाकपूणिना पठितम् । तेन चात्र (ना .... मिन्दा?) स्वं गृहं प्रतिपाद्यते । यजमानगृह इत्यर्थः । केन हेतुना । सोमस्य पीत्या पानेन, गिरा वाचा च स्तुतिलक्षणया । सोमपानार्थं स्तुत्यर्थं चेत्यर्थः । तेन मनुष्वत् मनुष्यवत् । शम्भू सुखस्य भावयितारौ । अस्मद्गृहमागतम् । आगच्छतम् ॥ १३ ॥

### वेङ्कटमाधवीयम् ।

वावसाना । वसनशीलौ । यजमाने सोमपाने । स्तोत्रेण च हेतुना । सुखस्य भावयितारौ नरवदिहाग(च्छ)तम् [illegible] ॥ १३ ॥

**युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् ।**

**ऋता वनथो अक्तुभिः ॥ १४ ॥**

युवोः । उषाः । अनु । श्रियं । परिऽज्मनोः । उपऽआचरत् ।

ऋता । वनथः । अक्तुऽभिः ॥ १४ ॥

## स्कन्दस्वामीयम् ।

युवोरित्येतदन्वित्येतेन सम्बध्यते । अनुशब्दश्च पश्चाद्भावे । युवयोः पश्चात् । कीदृशयोः । परिज्मनोः अजतेर्गत्यर्थस्येदं रूपम् । सर्वतोगामिनोः । उषाः श्रियं ज्योतिर्लक्षणम् उपाचरत् उपगच्छति प्रतिपद्यते । अश्विनोर्ह्यूर्ध्वं मध्यरात्रात् कालः । ततःपरमुषसः अथवा युवोरित्येतच्छ्रियमित्येतेन सम्बध्यते । युवयोः श्रियमुषाः अनूपाचरत् अनुगच्छति । युवयोः श्रिया सदृशीत्यर्थः । किञ्च, ऋता यज्ञान् युवां वनथः सम्भजथः । कीदृशान् । अक्तुभिः । अक्तुरिति रात्रिनाम । रात्र्या च तस्याः पर्याया लक्ष्यन्ते । इत्थंभूतलक्षणैषा तृतीया । रात्रिपर्यायैः सम्बद्धानित्यर्थः । अथवा अक्तुशब्दोऽत्र सोमवचनः । 'होतारमक्तोरतिथिं विभावसुम्' इति यथा । सोमैः सम्बद्धान् । सोमयागानित्यर्थः ॥ १४ ॥

वेङ्कटमाधवीयम्।

युवोरुषाः। युवोः श्रियमुषा अनूपाचरत्। पश्चाद् युवयोरागच्छति परितो गन्त्रोः। यद्वा[1] युवां रात्रिभिर्गच्छन्तीभिः सह सम्भजथः॥ १४॥

उभा पिबतमश्विनोभा नः शर्म यच्छतम्।
अविद्रियाभिरूतिभिः॥ १५॥

उभा। पिबतम्। अश्विना। उभा। नः। शर्म। यच्छतम्। अविद्रियाभिः। ऊतिऽभिः॥ १५॥

स्कन्दस्वामीयम्।

उभौ युवां पिबतं सोमं हे अश्विनौ!। पीत्वा उभौ नः अस्मभ्यं शर्म सुखं गृहं वा यच्छतम् दत्तमित्यर्थः। अविद्रियाभिः। 'दृ विदारणे'। सहयोगलक्षणा चैषा तृतीया। अविदारणीभिरविनाशिनीभिः ऊतिभिः पालनैः सह। स्थिराणि च पालनानीत्यर्थः॥ १५॥

वलभीविनिवास्येतामृगर्थागमसंहृतिम्।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ
ऋग्वेदभाष्ये तृतीयोऽध्यायः॥

वेङ्कटमाधवीयम्।

उभा पिबतम्। उभौ सोममश्विनौ! पिबतम्। उभौ चास्मभ्यं सुखं यच्छतं रक्षणपरैर्गमनैरिति॥ १५॥

इत्थं तृतीयमध्यायं व्याकरोत् प्रथमेऽष्टके।
विश्वामित्रकुले जातो माधवः सुन्दरीसुतः॥

इति प्रथमस्य तृतीये पञ्चत्रिंशो वर्गः॥

शुभं भूयात्।

१. 'थम्' घ. पाठः.

# स्मृतवाक्याद्यनुक्रमणी ।

| पृष्ठम् | ऋक् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| ५० | १७ | 'वंस्वा नो वार्या पुरु' | ऋग्वेदः | .. |
| ५१ | १८ | अहं स यो नववास्त्वम् ' | .. | ... |
| ५२ | १९ | 'यस्य च भावेन—' | अष्टाध्यायी | पाणिनिः |
| ,, | ,, | 'यमग्निं—' | ऋग्वेदः | ... |
| ५३ | २० | 'युष्मदस्मद्भ्यां छन्दसि सादृश्य—' | वार्तिकम् | वररुचिः |
| ५४ | २ | 'अंसेषु व ऋष्टयः' | ... | ... |
| ५५ | ३ | 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' | निघण्टुः | ... |
| ,, | ४ | 'अच उपसर्गात् तः' | अष्टाध्यायी | पाणिनिः |
| ५६ | ,, | 'अदितिः किल शत्रुहननसमर्थं—' | इतिहासः | ... |
| ,, | ,, | 'ममैवायमपराधः' | ,, | ... |
| ,, | ,, | 'तैः सहेन्द्रः' | ,, | ... |
| ५७ | ५ | 'पृश्नियै वै पयसो मरुतो जाताः' | ब्राह्मणम् | ... |
| ६० | १० | 'पृश्नेः पुत्रा उपमासो रभिष्ठाः' | मन्त्रम् | .. |
| ,, | ,, | 'रुद्रस्य ये मीढुषः सन्ति पुत्राः' | ,, | ... |
| ६१ | ११ | 'दनो विश इन्द्र मृध्रवाचः' | निरुक्तम् | यास्कः |
| ,, | ,, | 'दक्षिणेन हस्तेन देवानसृजत्' | छाङ्गलेयिश्रुतिः | . . |
| ६३ | १४ | 'अस्मदो द्वयोश्च' | अष्टाध्यायी | पाणिनिः |
| ६६ | ३ | 'सुविते सु इति सूते —' | .. | यास्कः |
| ,, | ४ | 'गोमातरो यच्छुभयन्ते' | ऋग्वेदः | ... |
| ,, | ,, | 'यदग्ने स्यामहं त्वं' | ,, | ... |
| ,, | ,, | 'यदिन्द्र यावतस्त्वम् ' | ,, | ... |
| ७७ | ४ | 'रुद्रस्य ये मीढुष. सन्ति पुत्राः' | ,, | . |
| ,, | ,, | 'नूचित् स भ्रेषते जनो न रेषत्' | ,, | ... |
| ७९ | ६ | 'विभुर्वा याम ' | ,, | ... |
| ,, | ,, | 'प्रत्याङ्भ्यां श्रुवः—' | अष्टाध्यायी | पाणिनिः |
| ८० | ७ | 'गत्यर्थकर्मणि द्वितीया—' | ,, | ,, |
| ,, | ,, | 'इत्थम्भूतलक्षणे' | ,, | ,, |
| ८४ | ३ | 'यो वै यज्ञं हविष्पङ्क्तिं वेद' | ऐ. ब्राह्मणम् | ... |
| ८७ | ७ | 'प्रसमुपोदः पादपूरणे' | अष्टाध्यायी | पाणिनिः |
| ९६ | ३ | 'अधिपरी अनर्थकौ' | ,, | ,, |
| १०२ | ३ | 'तृतीया न तु केवला मित्रेण वरुणेनात्र—' | बृहद्देवता | शौनकः |

| पृष्ठम् | ऋक् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १०२ | ३ | 'तृतीया न तु केवला सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे' | बृहद्देवता | शौनकः |
| १०८ | २ | 'रथो ह्वा एष भूतो' | ब्राह्मणम् | ... |
| १२४ | ४ | 'जारो अपाम्—' | ... | ... |
| ,, | ,, | 'पिता कुटस्य कर्मणश्च—' | ... | यास्कः |
| ,, | ,, | 'सोमलक्षणेन हविषा अग्निः' | ... | ... |
| १२५ | ५ | 'कर्तृकर्मणोः कृति' | अष्टाध्यायी | पाणिनिः |
| १२८ | ९ | 'नाभाकस्य प्रशस्तिभिर्यः—' | ऋग्वेदः | .. |
| १२९ | १० | 'अनायतोऽनिबद्ध—' | ,, | ... |
| १३१ | १४ | 'होतारमक्तोरातिथिं विभावसुम्' | ,, | |